Sri:



# Sri Paramukha Chapetika and Nathva Chandrika

BY

Thirumalai Lakshmikumara Koti Kanyakadanam

MAHAMAHOPADYAYA SRIKRISHNA THATHADESIKAN

Published:—

Koti Kanyakadanam

Thiru SAMPATHKUMARA THATHACHARIAR



सामान्य बुद्धिजनकाश्च सदादि शब्दाः तत्वान्तर भ्रमकृतश्चशिवादि वाचः ।
नारायणे त्वयिकरीश वहन्त्यनन्यमन्वर्थ वृत्ति परि कल्पितमैककण्ट्यम् ॥

ஸ்ரீ

ஸ்ரீமதே ராமாநுஜாய நம:

# நிவேதனம்.

ஸர்வதந்த்ர ஸ்வதந்த்ராய ஸிம்ஹாய கவிவாதிநாம் ।
ஸ்ரீமதே வேங்கடேஶாய வேதாந்தகுரவே நம: ॥

ஸ்ரீ க்ருஷ்ண தாதார்ய பதாம்புஜாஶ்ரயே ।
ஸத்வாதிகுண ஸம்பந்நாய ஸர்வவிஜ்ஞாநவான்பவேத் ॥

அயோத்யா மதுரா மாயா காஶீ காஞ்சீ அவந்திகா ।
புரீ த்வாரவதீ சைவ ஸப்தைதே மோக்ஷதாயகா: ॥

முக்திதரும் நகரெழில் முக்கியமாம் கச்சி என்னும் கோயில் திருமலை பெருமாள் கோயில் என்று ஸம்ப்ரதாய ப்ரஸித்தமாயும் ஸத்யவ்ரத க்ஷேத்ரமாயும் ஸ்ரீ பொய்கையாழ்வார் ஸ்ரீவேதாந்த தேசிகன் அவதாரஸ்தலமாயுமிருக்கிற (பெருமாள் கோயில்) காஞ்சீ நகரத்தில் ஸ்ரீநாதமுநிகள் ஸ்ரீயாமுநமுநிகள் ஸ்ரீபௌத்ர வர்ணர் (பிள்ளான்) ஸம்ப்ரதாய ப்ரவர்த்தக வம்ஶோத்பந்ந ஸ்ரீ தாததேசிகன் கோடி கன்யகாதானம் லக்ஷ்மீகுமார தாத தேசிகன் திருவம்சத்தில் ஸ்வபாநு வருஷம் ஐப்பசி மாஸம் ஜ்யேஷ்டா நக்ஷத்திரத்தில் அவதரித்து யஜுர்வேதம். ஸாமவேதம் தர்க்கமீமாம்ஸா வ்யாகரணம் உத்தரமீமாம்ஸா ஶாஸ்த்ரங்கள் அப்யஸித்தருளி வம்ச பூர்வமான ஸ்ரீ தேவாதிராஜன் விஶேஷ கைங்கரியத்தை முப்பது ஸம்வத்ஸரம் அங்கீகரித்தும் க்ருஹத்தில் ஸ்ரீ வேதாந்ததேசிக விக்ரஹப்ரதிஷ்டைபண்ணி நிரந்தரமாக ஆராதனம் பண்ணி கொண்டும் ஸ்ரீவேதாந்த தேசிகன் அவதார ஸ்தலமான தூப்புல் தீபப்ரகாசன் ஸன்னிதியில் ஸ்ரீவேதாந்த தேசிகன் திவ்யாஜ்ஞா கைங்கரியத்தை விசேஷ நிர்வாஹ பூர்வமாக பரிபாலனம் செய்து ஸ்வயம் க்ருத க்ரந்தநிர்மாணம் ஸந்த்யாஷாம்ஶ ப்ரயோஜநம் । ஶ்ரத்தாவதாம் ஸதாசார்ய ஸேவநம் ஸ்தத்ஸ்தம் ॥ என்கிற படியவாகாமங்களில் வேதாந்த தர்க்கமீமாம்ஸா வ்யாகரணஶாஸ்த்ர ஶாஸ்த்ர ப்ரவசநங்கள் பண்ணிக் கொண்டும் ஸ்ரீ காஞ்சியில் ஸ்ரீ தேவாதிராஜன் நித்ய கைங்கரிய பராயணராக 66 ஸம்வத்ஸரம் எழுந்தருளியிருந்தபடி.

ஸ்ரீ ஸ்வாமி ஸன்னிதியில் வித்யாப்ரஸங்கம் பண்ணி திவ்யகவித்வாதி கீர்த்திமான்களாக அநேக வித்வான்கள் அங்கே அங்கே இருந்தார்கள். அவரவர்கள் செய்தருளின க்ரந்தங்களில் ஸ்ரீ ஸ்வாமியின் வைலக்ஷண்யத்தை புகழ்ந்து பேசியுள்ளார்கள். அதை விஸ்தார பயத்தால் எழுத முடியவில்லை.

ஸ்ரீ ஸ்வாமி செய்தருளிய க்ரந்தங்கள் அறுபது. அதற்குள் இந்த வாதார்த்த ப்ரவேஶிகா கண்டநாதிகா க்ரந்தங்களும் சேர்ந்தது. இந்த இரண்டும் நாராயண சப்தார்த்தை விவரிக்கிறது. இதில் ஒன்று வாதரூபமாகவும் மற்றொன்று சப்தார்த்த ரூபமாகவும் உள்ளது.

॥ श्रीः ॥

॥ श्रीमते प्रणतार्तिहरवरद परब्रह्मणे नमः ॥

# ॥ विज्ञापनम् ॥

**अजायन्त यतस्स्रष्टा प्रजाश्चेशमुखा इमाः।**
**अजातस्स्वयमिन्धेऽसौ गजाद्रयग्रे श्रियः पतिः ॥**

श्रियः पतिः अखिलहेयप्रत्यनीककल्याणैकतानः नारायण एव खलु निखिलजगत्कारणमिति सर्ववेदान्तैककण्ठ्य सिद्धस्सिद्धान्तः

यद्यपि केषुचित्कारणवाक्येषु सद्ब्रह्मात्मादि शब्दा एव कारणाभिधायिनः श्रूयन्ते। तथापि ते अनेकेषु वस्तुषु बहुशो दृष्टप्रयोगाः कारणवस्तुविशेषं प्रदर्शयितुमक्षमाः तत्प्रदर्शनाय समान प्रकरणे तादृशवस्तुविशेषासाधारणं अभिधानविशेषं प्रतीक्षमाणा एव तिष्ठन्ति। क्वचित् "शिव एव केवलः" इत्यादौ श्रुतोऽपि शिवशब्दः शुभत्वसामान्यरूढ्या अनेक साधारणप्रयोगविषयतया नोक्त विशेषाकाङ्क्षां पूरयितुं समर्थस्स्यात्। एवं इन्द्रादिशब्दा अपि ऐश्वर्यादियोगेन साधारणतया तदवस्था एव स्युः।

परिशेषात् महोपनिषदादिषु श्रूयमाणः नारायणशब्द एव अनितरसाधारणतया लोकवेद प्रसिद्ध्या उक्तविशेषाकाङ्क्षापूरणनिपुणः स्वाभिधेये भगवत्येव सद्ब्रह्मात्मशिवादिसामान्यशब्दान् छाग-पशुन्यायेन पर्यवसाययितुं अद्वितीय एव सन्नद्धो जागर्ति। यतः सुप्रसिद्धंखलु आबालगोपालं लोके नारायणशब्दस्य विष्णौ भगवत्यैकान्त्यं। नहि कश्चित्पामरोऽपि अन्यां देवतां नारायण इति मन्यमानो वा ब्रुवाणो वा लोके दृश्यते। एवं अभिधानकोशादयोऽपि विष्णुमेव तदभिधेयं विना विगानं अभिदधति। तथा सात्विकपुराणान्तर्गते वामनपुराणे अस्य नाम्नः भगवदसाधारण्यं स्मर्यते। नहि नारायणादीनां नाम्नामन्यत्रसंभवः "ऋते नारायणादीनि नामानि पुरुषोत्तमः ॥ प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्"। इति. वेदेष्वपि पुरुषसूक्तादिवाक्यानि लक्ष्मीपतिमेव नारायणं कारणमामनन्ति। अतः नारायणशब्द एव कारणविशेषनिर्धारणसमर्थो भवितुमर्हति। न ब्रह्मशिवादिशब्दाः

किञ्च ब्रह्मरुद्रेन्द्रादीनां कारणवाक्येषु 'न ब्रह्मा नेशानः नारायणाद्ब्रह्माजायते नारायणाद्रुद्रो जायते' इत्यादिना सर्गादावविद्यमानत्वोत्पद्यमानत्वादिश्रवणात् अखिलकारणत्वयोग्यताविरहादपि तेषु सामान्यशब्दपर्यवसानप्रसक्तेः अवकाशो नैव सम्भवितुमर्हति। नारायणस्य तु साधुपरित्राणाय दयया बहुतरावतारश्रवणेऽपि "अजायमानो बहुधाविजायते" इत्यादौ स्वेतरसकलसाधारणकर्माधीनजननस्य निषेधश्रवणात् सर्गादौ सत्वे बाधशङ्कानवकाशेन सर्वकारणतावधारणमुपपन्नमेव भवितुमर्हति इति श्रुतिस्मृत्याद्यनुगुणम् प्राचीनाचार्यसंप्रदायपरम्परा समधिगतं सिद्धान्तम्

**"निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे**
**सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः"**

इति आचार्यचरणाः सङ्जगृहुः।

तदेतदसहमानानां केषांचिच्छैवानां शिवमाहात्म्यप्रतिपादनपरतया तामसपुराणान्तर्गते कूर्मपुराणादौ शिवेऽपि दृष्टं नारायणशब्दप्रयोगमादाय अस्य शिवसाधारण्यमापादयतां दुर्वादमुन्मूलयितुमिदं णत्वचन्द्रिकासहितं परमुखचपेटिकाभिधानं ग्रन्थरत्नमनुगृहीतम् श्रीतिरुप्पकुलि स्वामिपादैः। ये खलु शताधिकेभ्यो वत्सरेभ्यः प्राक् मुक्तिक्षेत्रमुख्यतमे सत्यव्रतक्षेत्रे साक्षात्सल्लापयथोक्तकरणकारयितृत्वादिपर्यन्तभगवदनुभवविभवसमुन्नीतमहाभाग्ययोग्यसरोयोगिकाञ्चीपूर्णश्रीमन्निगमान्तमहादेशिकादिदिव्यसूर्यवतारतच्चरणनलिनपरागपवित्रीकृतपरिसरे तिशय काञ्चीपुरे श्रीमन्नाथयामुन श्रीशैलपूर्ण कुरुकेश्वरतातार्यलक्ष्मीकुमारतातदेशिकादिदिव्यसूर्यवतारसमधिगत महत्तरपदानुगुण प्रशंसाति शय शालिनि श्रीशैलवंशे समवतीर्णाः श्रीमन्निगमान्तमहादेशिकवद्विंशतिवत्सर एव समधिगतसकलविद्याः आचार्यकौपयिकात्मगुण परिपूर्णाः असकृदध्यापितसर्वशास्त्रविस्तराः पण्डितप्रकाण्डीकृतशिष्यमण्डलाः सर्वेष्वपि शास्त्रेषु अत्यद्भुतसमुचितसहृदयहृदयङ्गमसुगमतमानुगमसरलपरिष्कारसहकृतसङ्क्षिप्तविस्तृतानेकप्रबन्धनिर्माणनिर्मित-लोकोपकारसंपादितपाण्डित्ययशोविलासविशोभितदशदिशावकाशाः महामहोपाध्याय बिरुदभाजः श्रीकृष्ण-तातयार्याभिधानाः श्रीदेवाधिराजदिव्यालयश्रीसेनेश्वरदिव्यकैङ्कर्यनिर्वाहकप्रधानतमा आसन्निति अद्यापि सर्वैरपि प्रायेण पण्डितपरिगणनावसरे प्रथममनुसन्धीयन्ते ॥ तैरनुगृहीतेषु षष्ट्यधिकेषु प्रबन्धेष्वन्यतममिदं णत्व चन्द्रिकासहितं परमुखचपेटिकाभिधानं ग्रन्थरत्नम् ॥ अस्यग्रन्थस्य निर्माणकारणन्तु शिवकाञ्च्यां केनचिच्छा-स्त्रिणा कृतं नारायणपदस्य शिवपरत्वोपन्यासमाकर्ण्य खिद्यमानानां शिष्याणां तन्निरसन प्रार्थनमेवेति वदन्ति ।

प्रकृतग्रन्थपरामर्शे तु इतः पूर्वमपि परपक्षग्रन्थः तन्निरसनग्रन्थश्च अवर्ततेत्येवमभ्यूहितुमपि अवकाशो दृश्यते ।

तथाहि नारायणशब्दः शिवपरः शिववृत्तिधर्मावच्छिन्नप्रतिपादकत्वात् इति परोक्तानुमानप्रयोगे पक्षसाध्य हेतुविकल्पदूषणावसरे नारायणशब्दस्यशिवे रूढ्यभावमभ्युपगम्यैव वादप्रवृत्तेः परेण स्वयंदर्शित-त्वादिति वचन स्वारस्यात् परग्रन्थः स्वामिपादानां दृष्टिविषयः कश्चिदासीदिति भाति । एवं परप्रयोगे स्वोक्तदूषणावसाने यदपि नारायणशब्दस्य केवलयौगिकत्वे णकारघटितत्वं न सम्भवतीति निरुक्तहेतुः स्वरूपासिद्ध इति तदप्ययुक्तम् । केवलयौगिकत्वे णकारघटितस्यासाधुत्वेऽपि नरसम्बन्ध्यधिकरणकत्वरूपशिववृत्तिधर्मावच्छिन्न बोधकत्वानपायेन स्वरूपासिद्ध्ययोगादित्यादिना परोक्तहेतौ केनचिदुक्तस्य स्वरूपासिद्धिदोषस्य वारणकरणात् । तथा तत्रैव "यदपि नारायणशब्दः न शिवपरः शिवविषयकशाब्दबोधप्रयोजकाकाङ्क्षा शून्यत्वादिति तदप्ययुक्तम् णकारघटितानुपूर्व्याः सर्वमतेऽपि शिवविषयकबोधप्रयोजकत्वस्य दुर्निवारतया स्वरूपासिद्धेः इत्यादिना परोक्तानुमानस्य प्रत्यनुमाने दोषोद्भावनाच्च परमतग्रन्थः तन्निराकरणग्रन्थश्च कश्चन प्रागेवासीत् तद्दर्शनानन्तरमेवायं ग्रन्थः निर्मित इति प्रतिपत्तुमस्त्येवावकाशः । परन्तु तथाविधो ग्रन्थः केन कृतः किंरूप इति तु नेह निर्धारयितुं शक्यते ।

यद्यपि आन्ध्राक्षरमुद्रितः कर्तृस्यरणरहितः विंशतिपुटसङ्घटितः करतल परिमिताकारः परपक्षनिराकरणपरः णत्वचन्द्रिकाभिधानः कश्चन कोशःपरमुपलभ्यते । तथापि तत्र नारायणपदे उत्तरपदस्य

प्रत्ययलक्षणनिषेधेन पदत्वाभावादुत्तरपदाक्षेपकस्य "पूर्वपदात्सज्ञायामगः" इति सूत्रस्य प्रवृत्त्यसम्भवेन णत्वासम्भवात् रूढिशक्तिरेव न सम्भवितुमर्हति । किन्तु नाराणामयनमिति तत्पुरुषसमासे अयनपदस्य प्रत्ययलक्षणनिषेधेन पदत्वाभावात्सामानपद्याविघातेन "रषाभ्या" मिति सूत्रेण णत्वप्राप्त्या यौगिकत्वमेवेति शिवसाधारण्यमनिवार्यमित्याक्षेपे उत्तरपदस्य समासचरमावयवे रूढत्वेन अयनपदस्य प्रत्ययलक्षणनिषेधेऽपि उत्तरपदत्वोपपत्तेः अन्यथा "ऋगयन" मित्यादावप्युक्तरीत्या अयनपदस्य पदत्वाभावे णत्वाप्रसक्त्या "अग" इति प्रसज्यप्रतिषेधानुपपत्तेः सूत्रान्तरात्प्रसक्त्यापादने "अट्कुप्वाङि" ति कवर्गव्यवधानेऽपि णत्वविधिनाविरोधेन रागेण श्रृङ्गेणेत्यादावपि णत्वानुपपत्तिप्रसङ्गे न च तत्प्रतिषेधानुपपत्तिः इत्यादियुक्तिभिः पूर्वपदादित्यनेनैव नारायणशब्दस्य भगवति विष्णौ रूढिसमर्थनमेव प्राधान्येन क्रियते । अन्यत्तु प्रसक्तानुप्रसक्त्या । प्रकृते परमुखचपेटिकाग्रन्थे तु नारायणपदस्य शिवेरूढ्यभावेऽपि नाराणामयनमिति तत्पुरुषसमासेन यौगिकत्वंसम्भवतीत्याक्षेपस्य निमित्तानधिकरणायनपदघटितत्वेन सामानपद्याभावाद संज्ञायां णत्वं न संभवतीति परिहार उक्ते "उत्तरपदेचापदादिविधा" विति वार्तिकेन प्रत्ययलक्षण निषेधेन अयनपदस्य असुबन्तत्वेन पदत्वाभावान्निमित्तानधिकरणपदाघटितत्वसत्वेन सामानपद्यसत्वात् णत्वं सुलभमेवेति पुनस्समुत्थाने तत्प्रतिक्षेपाय तद्वार्तिकस्य णत्वविधौ प्रवृत्तिरेव न सम्भवतीति प्राधान्येन साध्यते बहुधा ।

तत्र प्रथमं वार्तिके सतिसप्तम्याः प्रयुक्तत्वसामानाधिकरण्योभयार्थकतया उत्तरपदस्य यत्पदत्वं तस्य सामानपद्यविघटनेन णत्वविरोधिनः णत्वविधिप्रयोजकत्वासम्भवात् उत्तरपदत्वप्रयुक्तविधित्वं णत्वविधेर्न सम्भवतीति न तत्र तद्वार्तिकं प्रवर्तितुमर्हतीत्युक्तम् ।

अनन्तरं अपदादिविधिशब्दस्य पदान्तत्वप्रयुक्तविधिपरतायाः आवश्यकतामुपपाद्य णत्वविधेः पदान्तत्वाप्रयुक्ततया न तत्र वार्तिकप्रवृत्तिरिति चोक्तम् एवं णत्वविधौ उक्तवार्तिकप्रवृत्तौ "प्रणिरन्त" रित्यादि सूत्रवैयर्थ्यम् । "प्रवणादिष्वट्कुप्वाङ्" इत्यनेनैव णत्वसिद्धेः तथात्वनं पुरोगेति सूत्रेऽग्रग्रहणवैयर्थ्यं अग्रे वणे अट्कुप्वाङित्यनेनणत्वोपपत्तेः अनयोर्नियमपरत्वे परिसङ्ख्यारूपस्य नियमस्य त्रैदोष्यापादकत्वाद्गौरवम् उक्तवार्तिकस्य णत्वविधावप्रवृत्तौ उक्तसूत्रयोः विधिपरत्वसम्भवात् लाघवं स्यात् । अतोऽपि णत्व विधावुक्त वार्तिकं न प्रवर्तते इति नारायण पदस्थ अयनपदस्य पदत्वाविघातेन तद्घटिततया नारायणपदस्य सामान पद्यासम्भवेन "असंज्ञायां णत्वं दुर्लभमेवेति स्थापितम् । अतो पूर्वग्रन्थादस्य ग्रन्थस्य विषयभेदः स्फुट एव । क्वचिद्विषयैक्ये सत्वेऽपि तत्रापि परग्रन्थेष्वदृष्टाः न्यायमीमांसकमनोहराः तत्रतत्र व्याप्त्यनुमान-शिक्षणलाघवगौरवविचारन्यायसञ्चारादयः अत्र अधिकतरा एव उपलभ्यन्ते इति न ग्रन्थान्तरेण कृतकरत्व शङ्कावकाशः । अत्रापि हि प्रसक्तानुप्रसक्त्या क्वाचित्कनारायणशब्दप्रयोगमात्रेण शिवे रूढि साधनं निराकर्तुं व्यभिचारादिदोषप्रसक्त्यनापादकं साध्यहेतुशरीरं "अन्याय्यं चानेकार्थत्व" मिति न्यायानुसारेण परिष्कृत्य लाघवगौरवे निरूप्य लाघवतर्कानुगृहीतेन तेनानुमानेन भगवति विष्णावेव नारायणपदस्य शक्तिः शिवे नारायणशब्दवाच्यभगवत्सादृश्यरूपलक्ष्यतावच्छेदकावच्छिन्ने लक्षणैवेत्युपपाद्य तर्हि हर्यादिपदेऽपि एवं स्यादिति शङ्कायां तत्र विनिगमकाभावात अगत्या अनेकार्थशक्त्युपगमेऽपि यत्र

प्रयोगबाहुल्यादि रूपं शक्तिग्राहकप्रमाणप्राबल्यं विनिगमकमस्ति तत्रैव क्वचिच्छक्तिः क्वचिल्लक्षणेति व्यवस्थेति प्रतिपाद्य तत्र "तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्या" दिति पूर्वमीमांसागतार्थप्रसिद्धि बलीयस्त्वाद्यधिकरणन्यायसञ्चारः कृतः ।

एवं "रषाभ्यां नोणस्समानपदे" इत्यत्र पदे इत्यनेनैव एकपदस्थत्वलाभात्समानपद वैयर्थ्यमिति प्रतिपादनावसरे गीर्नमतीत्यादावपि प्रत्येकं पदयोरेकत्वसत्वात् निमित्तनिमित्तिनोरेकपदस्थत्वेन णत्वा पत्तिरिति शङ्कायां स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूप स्वसजातीयद्वितीयरहितत्वं एकवचन- विवक्षितमिति गदाधरोक्तरीत्या एकत्वपरिष्कारं कृत्वा साजात्यंच स्वसभिव्याहृतपदार्थसंसर्गित्वविशिष्ट स्वप्रकृत्यर्थतावच्छेदकरूपेण, प्रकृते समभिव्याहृतपदार्थः निमित्तं निमित्तिचेत्युभयम् । प्रकृत्यर्थ- तावच्छेदकन्तु पदत्वं । तथाच निमित्तिनिमित्तोभपाधिकरण पदनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य निमित्तिमत्पदैकत्वे निमित्ताधिकरणपदैकत्वे च सत्वात् गीर्नमति इत्यादौ प्रत्येकं पदद्वयनिष्ठैकत्वस्यान- वच्छेदकत्वाभावान्न निमित्तनिमित्तिनोरेकपदस्थत्वमिति न णत्वापत्तिरिति परिहृतम् ।

तथा रामनामा इत्यादौ णत्वापत्तिवारणाय मातृभोगीण इत्यादौ णत्वानुपपत्तिवारणाय च रषाभ्यां अट्कुप्वाङिति सूत्रयोर्विशिष्टार्थं परिष्कृत्य रामनारीत्यादौ णत्वापत्तिवारणाय प्रदर्शितानुगम प्रकारश्च नैयायिकहृदयङ्गमः

तथा उत्तरपदे चापदादिविधाविनि वार्तिके अपदादिविधावित्यस्य पदान्तविधिपरत्वे अन्य सदृशाधिकरणन्यायसञ्चारः पदादिपदान्तयोस्सादृश्यपरिष्कारश्च सुधियां मनोहरः

एवं पदे पदे सूत्रार्थं परिष्कृत्य अनुगमय्य नारायणशब्दस्य शिवपरत्ववारणमेतद्ग्रन्थस्य असाधारणं प्रमेयं नान्य ग्रन्थदर्शनेन समधिगन्तुं शक्यम् । इत्थमत्र नारायणशब्दस्य शिवपरत्वे णत्वोपपादक तथा परोक्तयुक्तीनां सम्यगेव निराकृतत्वात् वक्तव्यशेषो नास्त्येव । तथापि वादाहवकुतूहलिनां उत्साहाभि वृद्धये अत्रोक्तानेकार्थान् पूर्वपक्षसिद्धान्तकोटिक्रमेण प्रदर्शयितुं णत्वचन्द्रिकाभिधानः ग्रन्थः प्रवृत्तोप्यर्थ वत्तर एव । तदुक्तं तद्ग्रन्थारम्भ एव

णत्वे परोक्तयुक्तीनांदूषणं सम्यगीरितम् ।
तुष्टये वावदूकानां कक्ष्या षष्टिं प्रदर्शये ॥ इति

एवमत्युत्तमं इदं ग्रन्थरत्नद्वयंनक्षत्रसदृशैरक्षरैर्मुद्रापयित्वा सर्वदर्शनयोग्यतामापादयतां श्रीसम्पत्कुमार- तातार्याणां विषये सर्वैरपि अभिज्ञैः कृतज्ञैः भवितव्यमिति ।

यद्यप्यत्र लेखनमुद्रणप्रमादात् क्वचित्क्वचिदशुद्धयः सन्त्येव तथापि ताश्शुद्धाशुद्धपत्रिका संयोजनेन परिहरिष्यन्त इति प्रत्येमि इति ।

नावल्पाक्कम्
अध्या देवनाथाचार्यः

श्रीः

# श्री परमुखचपेटिका

श्रीमते रघुनन्दनपरब्रह्मणे नमः

रघुवंशदुग्धजलधौ जातं सन्तानमाश्रये कमपि ।
अतितुङ्गादपि यस्मात् विनतैरग्रयं फलं करग्राह्यम् ॥

सुरभितसमस्तलोकं संयमिवरचरणचन्दनं सेवे ।
छायां श्रयन् यदीयां स्थाणुमपर्णाश्रयं लघूकुरुते ॥

प्राचीनवाचानिचयांचलार्थ माचान्तमोचामदहृद्यवाचः ।
दुर्वारगर्वान् कुदृशोतिखर्वान् कुर्वाणमीडे कुलदैवतं नः ॥

श्री श्रीवासयतीन्दुः विलसतु सर्वज्ञशेखरो हृदये ।
यत्पादसङ्गलेशादपसरति तमः प्रकाशते सर्वम् ॥

लक्ष्मीकुमारतातयदेशिकवंशाब्धिशीतकिरणस्य ।
वेङ्कटगुरोस्तनूजः कृष्णः परमुखचपेटिकां कुरुते ॥

यदुक्तं नारायणशब्दः शिवपरः शिववृत्ति धर्मावच्छिन्नप्रतिपादकत्वात् । यथा शिवशब्द इति । तत्र किमिदं शिवपरत्वम् । शिववाचकत्वं वा, शिवबोधौपयिकाकांक्षाशालित्वं वा, शिवे साधुत्वं वा शिवबोधौपयिकतात्पर्यवत्वं वा, अन्यद्वा किञ्चित् । नाद्यः, सिध्दसाधनात् । अयनशब्दस्याधिकरणसामान्यवाचिनः शिववाचकत्वाक्षतेः । नारशब्दोत्तरत्वविशिष्टायनशब्दस्या यनशब्दानतिरेकात् नायायण शब्दान्तर्गत स्यायणशब्दस्य णकारघटितत्वेपि तस्याधिकरणवाचकत्वे विवादविरहात् । अन्यथा भगवति योगार्थप्रतीत्यनुपपत्ति प्रसङ्गात् । यदि च नकाराद्यवहितोत्तर अत्वरूपानुपूर्व्यवच्छिन्नवाचकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदको यो धर्मः तं पक्षीकृत्य शिववृत्ति धर्मावच्छिन्न प्रतिपादकतावच्छेदकतावच्छेदकता वच्छेदकता पर्याप्त्यनुयोगितावच्छेदकत्वेन हेतुना शिवशब्दत्वावच्छिन्नवाचकता वच्छेदकता पर्याप्त्यनुयोगितावच्छेदकधर्म दृष्टान्तेन शिववाचकतावच्छेदकतावच्छेदेकतापर्याप्त्यनुयोगितावच्छेदकत्वमेव साधनीयमित्यालोच्यते तदा बाधः । परमतेपि प्रक्षे साध्याभावसत्वात् रूढिनिरूपकतारूपवाचकतावच्छेदकतापर्याप्त्यनुयोगितायामेव पक्षात्मकोक्त धर्मस्यावच्छेदकत्वसंभवात् । नारायणशब्दस्य शिवे रूढ्यभावमभ्युपगम्यैववादप्रवृत्तेः । परेण स्वयं दर्शितत्वात् शिवलक्षकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मेपि हेतुसत्वेन व्यभिचारश्च ।

यदिच लक्षणा ग्रहानधीन शिववृत्तिधर्मप्रकारकशाब्दबोधौपयिकतात्पर्यविषयतावच्छेदकतापर्याप्त्यनुयोगिता वच्छेदकत्वमेव हेतुरित्यङ्गीक्रियते तदा स्वरूपासिध्दिः । नारायणशब्दजन्यनाराधिकरणत्वावच्छिन्न बोधस्यापि लक्षणाग्रहाधीनत्वात् । बहुव्रीहौ चरमपदस्यान्यपदार्थलाक्षणिकत्वनियमात् । अथ स्वारसिक लक्षणाग्रहानधीनत्वमेव बोधविशेषणं । बहुव्रीहिघटकचरमपदलक्षणा तु आनुशासनिकतया निरूढा । तथा च नस्वरूपासिध्द्यवकाश इति चेत् एवं सति प्रवीणादिशब्दनिष्ठनिरूढलक्षणानिरूपकतावच्छेदकतापर्याप्त्यनुयोगि तावच्छेदक धर्मे व्यभिचारः. स्वारसिकलक्षणाग्रहानधीनशिववृत्ति समर्थत्वप्रकारकबोधघटितहेतुमति तादृशधर्मे दर्शितसाध्यविरहात् प्रवीणादिशब्दानां समर्थत्वावच्छिन्ने निरूढलक्षणैवेत्यस्यालङ्कारविदां स्पष्टत्वात् । एवं केवलयोगेन शिवपरसंहत्रादिशब्दघटकवर्णसमुदायत्वेपि व्यभिचारो बोध्यः । दर्शितशब्दस्य शिवे रूढ्यभावेन उक्तसमुदायत्वे साध्याभावसत्वात् । द्वितीयेपि सिध्दसाधनमेव । नारायणशब्देनापि शक्तिभ्रमादिना शिव बोधोत्पत्या तादृशबोधौपयिकाकांक्षाशालित्वस्य तत्र संप्रतिपन्नत्वात् । शक्तिभ्रमाद्यनधीनत्वनिवेशेपि तद्दोष तादवस्थ्यम् । रूढिप्रतिसन्धानविरहदशायां शिवे तात्पर्यग्रहसत्वे केवलयोगेन शिवबोधस्यानुभाविकत्वात् । अथ नारायणशब्दात् केवलयोगेन शिवबोधोत्पत्तिस्वीकारे सिध्दंनस्समीहितम् । कारणवाक्यघटकनारायण शब्दादपि तादृशबोधसंभवादितिचेन्न तादृशबोधसंभवेपि तस्य प्रमात्वानुपपत्या शिवस्य जगत्कारणत्वासिध्देः । नच श्रुतिजन्यस्य तादृशबोधस्य कथं प्रमात्वानुपपत्तिरिति वाच्यम् । ईश्वरतात्पर्यप्रमाधीनस्यैव श्रुतिजन्यबोधस्य प्रमात्वनियमात् नारायणशब्दस्य केवलयोगेन शिवबोधपरत्वे साधुत्वानुपपत्या तत्र तादृशतात्पर्यासंभवात् । यत्तु शक्ति भ्रमाद्यनधीनशाब्दबोधौपयिकाकांक्षावत्त्वमेव साधुत्वम् । अन्यस्य दुर्वचत्वात् । इत्थं च केवल योगेन शिवबोधपरस्यापि नारायणशब्दस्य साधुत्वमस्त्येवेति तन्न साधुत्वस्य ईदृशत्वे केवलयोगेनान्यपरद्रुणस युधिष्ठिरादिशब्दाना मपि साधुताप्रसङ्गात् । नचेष्टापत्तिः । तथासति तेषां साधुत्वाभावबोधनपरस्य तत्तत्सूत्रेषु संज्ञादिग्रहणस्य असामञ्जस्यप्रसङ्गात् । अतो वक्ष्यमाणं जात्यादिरूपमेव साधुत्वमिति दर्शितशब्दस्यासाधुत्वं उपपद्यत एव । तस्मान्नारारणशब्दस्य केवलयोगेन शिवपरत्वे साधुत्वं वा कारणवाक्यघटक नारायणशब्दस्य शिवबोधौपयिकतात्पर्यवत्वमेव वा यावन्नसिध्यति तावन्न परेषामिष्टसिध्धिरिति बोध्यम् । तृतीयेपि सिध्दसा धनमेव । कूर्मपुराणादिषु शिवेपि नारायणशब्दप्रयोगेण तस्य तत्र साधुतायास्संप्रतिपन्नत्वात् । यदिच स्वारसिकलक्षणामन्तरा शिवे साधुत्वमिह साधनीयम् । कूर्मपुराणादिगत नारायणशब्दस्य शिवे लाक्षणिकताया एव सिध्धान्तिभिरभ्युपगतत्वेन न सिध्दसाधनावकाशः । ईदृशसाधुत्वसिध्दौच कारणवाक्यघटकनारा यणशब्दस्य शिवे तात्पर्यसंभवात् समीहितसिध्धिः । लक्षणामन्तरा शिवे साधुत्वं च लक्षणाग्रहानधीनशिव-विषयकबोधेच्छाधीनोच्चारणप्रयुक्तं साधुत्वम् । साधुत्वस्यहि एकश्शब्दः सम्यग्ज्ञातस्सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीतिश्रुतिसिध्दपुण्यविशेषजनकतावच्छेदकधर्मरूपस्य जातिरूपत्वे अखण्डोपाधिरूपत्वे वा यस्मिन्नर्थे यस्य शब्दस्य साधुत्वं प्रमाणसिध्दं तदर्थबोधेच्छाधीनतच्छब्दोच्चारणं साधुत्वविशिष्टतच्छब्दंप्रति कारण मित्यङ्गीकरणीयम् । अन्यथा निर्धनतुरगादि बोधेच्छया उच्चरितानामश्वास्वादिशब्दानां. साधुताप्रसङ्गात् । तथा च उच्चारणविशेषजन्यतावच्छेदकस्य जात्यादिरूपस्य सादुत्वस्य तादृशोच्चारणप्रयुक्तत्वमक्षतम् ॥ शक्तिविशे षरूपत्वे तत्तच्छब्दनिष्टतादृशशक्ति विशेषंप्रति दर्शितोच्चारणस्य कारणतया सुतरां तदुपपत्तिरित्यालोच्यते तदा

युधिष्ठिरादिशब्दे व्यभिचारः । नारायणशब्दयोगार्थतावच्छेदकस्येव एतद्योगार्थतावच्छेदकस्यापि शिवसाधारण्यानपायेन दर्शितहेतुमति तत्र लक्षणामन्तरा शिवे साधुत्वायोगेन दर्शितसाध्यविरहात् । न च शिववृत्ति धर्मावच्छिन्नप्रतिपादकत्वं स्वारसिकलक्षणाग्रहानधीनशिववृत्तिधर्मप्रकारकशाब्दबोधौपयिक ईश्वरतात्पर्यवत्त्वं । तथा च न व्यभिचारः । स्थैर्यस्य पलायनाद्यभावरूपत्वेपि अभावस्याधिकरणात्मकतया प्रतिव्यक्ति भेदात् युधिष्ठिरादिशब्दे रूढ्यर्थविशेष्यकयोग्यार्थबोधएव ईश्वरतात्पर्येण तादृशबोधे शिववृत्तिधर्मस्या प्रकारकत्वात् इति वाच्यम् । तथा सति सन्दिग्धासिध्देः पक्षे हेतोरुभयसंप्रतिपन्नत्व विरहात् । नारायणशब्दयोग्यार्थतावच्छेदकस्यापि प्रतिव्याक्ति भिन्नत्वेन शिववृत्तिधर्मप्रकारकबोधौपयिकेश्वरतात्पर्यवत्त्वस्य नारायणशब्दे सिध्दान्तिभिरनभ्युपगमात् । एवं शिवान्यद्रव्यपदे शिवसंयुक्तपदे च व्यभिचारः । तयोः शिवे साधुत्वविरहात् । शिववृत्तिद्रव्यत्वसंयोगाद्यवच्छिन्नप्रतिपादकत्वाच्च । यदि च शिववृत्तितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताक प्रकारताशालिबोधौपयिके श्वरतात्पर्यवत्वमेव हेतूक्रियते तयाच नोक्तदोषावसरः । नारायणशब्दजन्य भगवद्विशेष्यकबोधप्रकारतावच्छेदकस्य नाराधिकरणकत्वत्वस्य शिववृत्तितावच्छेदकत्वाक्षतेः । शिवान्यद्रव्यत्त्वरव शिवप्रतियोगिकत्वविशिष्टसंयोगत्वयोः शिववृत्तितानवच्छेदकत्वाच्चेत्युच्यते तदा युधिष्ठिरादिशब्दे व्यभिचारः । युध्धस्थैर्यत्वादिरूपशिववृत्तितावच्छेदकावच्छिन्नप्रकारताशालि बोधौपयिकेश्वरतात्पर्यवत्वस्य तत्र सत्वात् । साध्यविरहस्य च प्रागे वोक्तत्वात् । चतुर्थेपि यथाश्रुते सिध्दसाधनमेव । शिवबोधेच्छया शैवोच्चारिते नारायणशब्दे साध्यस्य संप्रतिपन्नत्वात्, विधिकोटिस्सामानाधिकरण्येनेत्यङ्गीकारात् । अवच्छेदकावच्छेदेन तदङ्गीकारे तु संप्रतिपन्न भगवन्मात्रतात्पर्यके बाधः स्पष्टः । ननु सामानाधिकरण्येन साध्यसिध्दे रुद्देश्यत्वेपि न सिध्दसाधनावकाशः । शिवबोधौपयिकेश्वरतात्पर्यवत्ताया एव साध्यत्वात् । नारायणशब्दे सिध्दान्तिभिस्तदनङ्गीकारात् ईदृशतात्पर्यवत्वसाधनमेव हि प्रकृतोपयुक्तम् । कारण वाक्यघटकनारायणशब्दाच्छिवबोधसंभवस्यैव उपपादनीयत्वात, वैदिकवाक्यार्थबोधे ईश्वरतात्पर्यस्यैव नियामकत्वादिति चेत् एवमपि यत्र क्वचन नारायणशब्दे दर्शितसाध्यसिध्दिं आदायानुमानपर्यवसानसंभवात् उद्देश्यासिध्दिः ! एवं घटो द्रव्यमिति वाक्यघटकद्रव्यपदे व्यभिचारश्च । द्रव्यत्वेन घटबोधपरे तस्मिन् उक्तसाध्य विरहवति शिववृत्तिद्रव्यत्वावच्छिन्नप्रतिपादकत्वसत्वात् । एवं युधिष्ठिरादिशब्देपि दर्शितदिशा व्यभिचारो बोध्यः । पञ्चमस्य परहृदयैकसाक्षिकनिर्वचनस्य शिवबोधौपयिकेश्वरतात्पर्यवत्त्वव्याप्यत्वे तादृशतात्पर्यविषयत्वसाधकतया कथंचित् प्रकृतोपयोगसंभवेपि घटो द्रव्यमिति वाक्यघटकद्रव्यपदे युधिष्ठिरादिशब्दे च व्यभिचारः । तत्र दर्शिततात्पर्यवत्त्वस्यासत्वेन तद्व्याप्यतादृशधर्माभावस्यावश्यकत्वात् । हेतोश्च प्राक् उपपादितत्वात् । तादृशधर्मस्य दर्शिततात्पर्यवत्त्वव्यभिचारित्वे तु प्रकृतानुपयोगः स्पष्टः । तादृशतात्पर्यवत्वसाधकत्वस्याप्यसंभवात् । तस्मात् परोपदर्शितः प्रयोगोनुपपन्न एवेति सिध्दम् । ननु तथापि कारणवाक्यघटक नारायणशब्दः शिवबोधौपयिकेश्वरतात्पर्यवान् कारणपरत्वात् नसन्नचासदित्यादिवाक्यगत शिवशब्दवत् सद्ब्रह्मात्मादि शब्दानामपि छागपशुन्यायेन शिवे पर्यवसानान्नतत्र व्यभिचारः । न चाप्रयोजकता । यद्यस्य शिवपरत्वं न स्यात् । तर्हि नसन्नचासदित्यादिवाक्यान्तरैकार्थ्यंन्नस्यादिति तर्कसभ्दावात् इति चेन्न । अप्रयोजकत्वात् । नसन्नचासदित्यादिवाक्यगतशिवशब्दस्य शुभत्वसामान्यरूढ्यैव भगवत्परत्व संभवेन उक्त

नारायणशब्दस्य शिवपरत्वाभावेपि भगवत्परतया कारणवाक्यान्तरैकार्थ्योपपत्तेः । तथाच कारणवाक्याघटको नारायणशब्दः भगवत्परः भगवदन्यपरत्वविरहे सति किञ्चित्परत्वात् पुराणरत्नगतविष्ण्वादिशब्दवदित्यनुमानेन भगवत्परत्वसिध्दिः । कथमस्य भगवदन्यपरत्वविरहसिध्दिरितिचेत् उच्यते किमस्य भगवदन्यपरत्वं, रूढ्या, आहोस्वित् केवलयोगेन, अथ वा लक्षणया । नाद्यः । अन्यत्र रूढ्यभावस्य स्थापयिष्यमाणत्वात् । द्वितीये नारमयनं यस्येत्याद्युपब्राह्मणदर्शितव्युत्पत्या वा कुदृष्टिकल्पितव्युत्पत्यन्तरेण वा । नाद्यः । तादृशव्युत्पत्या भगवदतिरिक्ते साधुत्वविरहात् । पूर्वपदात्संज्ञायामित्यनेनैव णकारघटितस्य साधुताया वर्णनीयत्वात् । अट्कुप्वाङित्यनेनान्यत्र णत्वसमर्थनं चोन्मूलयिष्यते । नान्त्यः । "इतिहासपुराणाभ्यां वेदं समुपब्रंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति" इति शास्त्रविसेधेन कुदृष्टिकल्पितकुसृष्टेः कारणवाक्यघटकनारायण-शब्दे स्वीकर्तुमशक्यत्वात् । न तृतीयः । मुख्यार्थबाधविरहेण निषादस्थपत्यधिकरणन्यायेन लक्षणायाः असंभवात् । तस्मान्न कथंचिदपि भगवदन्यपरत्वसंभव इति । एवं कारणवाक्यघटक नारायणशब्दस्य भगवत्परत्वसिध्दौ समानप्रकरणपठितानां सद्ब्रह्मात्मादिशब्दानां भगवत्येव पर्यवसानम् । छागोवा मन्त्रवर्णादिति न्यायात् । यथा पशुना यजेतेति श्रुतस्य पशुशब्दस्य छागस्यवपायामेदस इति मन्त्रवर्ण समर्पिते छागे पर्यवसानं तद्वत् । ततश्च कारणवाक्यघटकशिवशब्दः भगवत्परः कारणपरत्वात् तादृश नारायणशब्दवदित्यनुमानेन यद्यस्य भगवत्परत्वं न स्यात् तर्हि कारणवाक्यान्तरैकार्थ्यं न स्यादिति तर्कानुगृहीतेन कारणवाक्यघटकशिवशब्दस्यापि भगवत्परत्वसिद्या सर्वश्रुत्यैककण्ठ्येन भगवत एव जगत्कारणत्व सिद्या सर्वाधिकत्वसिध्दिः । यदपि जलशायित्वसमर्थनाय प्रयासादरणं तदप्यनुपादेयम् । नरसंबन्ध्यधिकरणकत्वस्यैव योगार्थतावच्छेदकत्वात् । शिवलोकादेश्शिवाधिकारण भूतस्य नरसम्बन्धितयैव योगार्थोपपादनस्य सुकरत्वात् । यदपि नारायणशब्दस्य केवलयौगिकत्वे णकारघटितत्वं न सम्भवतीति निरुक्तहेतुः स्वरूपासिध्द इति तदप्ययुक्तम् । केवलयौगिकत्वे णकारघटितस्यासाधुत्वेपि नरसंबन्ध्यधिकरणकत्वरूपशिववृत्ति धर्मावच्छिन्नबोधकत्वानपायेन स्वरूपासिध्ययोगात् । नहि साधुत्वं नास्तीत्येतावता शाब्दबोधजनकत्वमपैति । उक्तं हि पातञ्जलभाष्ये "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इति हरिणाप्युक्तम् "वाचकत्वा विशेषेपि नियमः पुण्यपापयोः" इति । यदपि द्रुरिव नासा यस्येत्यादि । तदपि व्याकरणानभिज्ञतापिशुनम् । अञ् नासिकायास्संज्ञायान्न सञ्चास्थूलादिति नासिकाशब्दस्य नसादेशविधानात् । यदपि इतरथा द्रुनसः खरनस इत्येव स्यादिति तदपि तथैव संज्ञायामेव नसादेशविधानात् । यदपि नारायणशब्दो न शिवपरः शिवविषयकशाब्दबोधप्रयोजकाकांक्षाशून्यत्वादिति । तदप्ययुक्तम् । णकारघटितानुपूर्व्यास्सर्वमतेपि शिवविषयकबोध प्रयोजकत्वस्य दुर्निवारतया स्वरूपासिध्देः न हि रूढिप्रतिसन्धानविरह दशायां शिवे योगशक्तेः तात्पर्यस्य च ग्रहे नारायणशब्दात् शिवबोधो न जायत इति बृहस्पतिनापि शक्यं साधयितुम् । एवं शिवसहस्रनामादिगतनारायणशब्दात् शिवबोधस्य सर्वसम्मतत्वादपि दर्शितानुपपत्तिरवसेया । यदपि कूर्मपुराणशिवसहस्रनामादौ शिवे नारायणशब्दप्रयोगदर्शनात् शिवेपि नारायणशब्दस्य संज्ञात्वं संभवति । कोशादेरिव श्रुतिपुराणादेरपि शक्तिग्राहकत्वादिति । तदप्ययुक्तम् गौणत्वेनापि संभवदुपपत्तिक काचित्कप्रयोगमात्रेण शक्तिसिध्दौ अतिप्रसङ्गात् वृत्त्यन्तर विलोपप्रसङ्गाच्च । अत्रेदंतत्वम् । नारायणशब्दस्य

शिवे प्रयोगो नाम शिवविषयकबोधेच्छया उच्चारणं। शिवबोधौपयिकतात्पर्यवत्वमिति यावत्। तच्च शिवशक्तत्वव्याप्यं तल्लाक्षणिके व्यभिचारात्। किंतुतच्छक्तत्वतल्लाक्षणिकत्वान्यतरस्यैव व्याप्यम् तत्रान्याय्यं चानेकार्थत्वमिति न्यायात्। शिवे भगवतिच शक्तिस्वीकारे अनेकशक्तिकल्पनागौरवप्रसङ्गेन एकत्र शक्तिरन्यत्र लक्षणेत्येव स्वीकरणीयम्। ततश्च प्रचुरप्रयोगविषये भगवति लक्षणाङ्गीकारे बहुषु स्थलेषु शक्यसंबन्धज्ञानानां तत्कारणत्वस्य च कल्पनागौरवम्। अल्पतरप्रयोगविषये शिवे तदङ्गीकारे तु लाघवम्। तथाच ईदृशगौरव-लाघवज्ञानसहकृतेन शिवशक्तत्वतल्लाक्षणिकत्वान्यतरव्याप्यवत्तापरामर्शेन शिवलाक्षणिकत्वमेव सिध्यतीति। न चैवं हर्यादिष्वपि तथा प्रसङ्गः। तत्र प्रयोगस्य उभयत्र तुल्यत्वेन दर्शितविनिगमकासंभवात्। उभयत्र शक्तिसिध्देः शक्तिग्राहकत्वेनाभिमतानां यत्रतुल्यबलत्वं तत्रागत्या उभयत्र शक्तिः। यत्र तु मात्रयापि वैषम्यं। तत्र प्रबलप्रमाणविषये शक्तिः। अन्यत्र लक्षणेतिहि न्यायविदां निर्णयः। अत एव तेषु अदर्शनाद्विरोधस्य "समा विप्रति पत्तिस्स्यात् इत्यधिकरणे" पीलुशब्दस्य आर्यप्रसिध्या वृक्षविशेषे म्लेच्छप्रसिध्या हस्तिनि च शक्तिः। प्रसिद्धिद्वयस्यापि तुल्यबलत्वात् व्यवहारविषये आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषादिति प्रापय्य अनेकार्थत्वस्यान्याय्यतया एकत्रैव शक्तिरन्यत्र लक्षणेत्येव युक्तम्। न च विनिगमनाविरहः। आर्यप्रसिध्देर्बलवत्वात्। आर्या हि शब्दैकसमधिगम्य धर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्वं विविच्य परिपालयन्ति। न म्लेच्छाः। दृष्टार्थव्यवहारस्य यथाकथंचिदप्युपपत्तेः। अतो वृक्षविशेषे शक्तिः। गजप्रतीतिस्तु लक्षणादिनैवेति सिध्दान्तितम्। एवं यत्रार्याणामेव उभयत्र प्रसिध्दिः। अथाप्यत्र वाक्यशेषाद्यनुग्रहः। तत्रापि वाक्यशेषाद्यनुगृहीतार्यप्रसिध्दिविषय एव शक्तिः। केवलार्यप्रसिध्दिविषये तु लक्षणादिकमेवेति व्यवस्थापितम्। तथा विश्वजिति सर्वपृष्ठ इत्यधिकरणे "रथन्तरं पृष्ठं भवति, बृहत् पृष्ठं भवतित्युत्पत्तिवाक्ययोर्माहेन्द्रस्तोत्रनामत्वेनावगतस्य पृष्ठशब्दस्यसप्तदशानि पृष्ठानीत्यनुवादवाक्ये माहेन्द्रादिषु चतुर्षु स्तोत्रेषु प्रयोगो लिङ्गसमवायन्यायेन लाक्षणिक इति प्रकृतौ पृष्ठबहुत्वं नास्तीति प्रपञ्चितम्। अतः प्रसिध्दिप्राचुर्येणाभिधानकोशेन च नारायणशब्दस्य भगवति शक्तिः। शिवे तु क्वाचित्कप्रयोगविषये लक्षणैवेति स्पष्टंन्यायविदाम्। किंबहुना। नहि नारायणादीनां नाम्नामन्यत्र संभवः। "ऋते नारायणादीनि नामानि पुरुषोत्तमः। प्रादादन्यत्र भगवान् राजेवर्तेस्वकं पुरम्" इत्यादिवामनपुराणादिवचनबलेन नारायणशब्दस्य भगवदतिरिक्ते शक्त्यभावस्य बोधनात्। कूर्मपुराणादिगतनारायणशब्दस्य शिवे लाक्षणिकत्वमेवाकामे वा कामेनापि स्वीकार्यम्। ननु कूर्मपुराणगतोक्त नारायण शब्दस्य लाक्षणिकत्वसंभवेपि शिवसहस्रनामगतस्य तस्य नतथात्वसंभवः। नामशब्दस्य रूढपरतया शिवे रूढत्वमन्तरा शिवनामत्वानुपपत्तेरिति चेन्न। तत्र नामशब्दस्य प्रातिपदिकमात्रपरतया रूढपरत्वविरहात्। अत एव निपातातिरिक्तनामार्थयोरित्यादेः केवलयौगिके लाक्षणिकेपि च प्रवृत्तिरुपपद्यते। अत एव च भगवद्गुणदर्पणे "यानि नामानि गौणानि विख्यातानी" त्यत्र विख्यातशब्देनैव भगवन्नाम्नां रूढत्वसिध्दिरनुगृहीता। किंच नहि नाराणादीनामित्यादिसात्विकपुराणवचनविरोधेन दर्शिततामसपुराणबलेन न रूढत्वसिध्दिसंभवः। नचैवं तादृशनारायणशब्दस्य णत्वानुपपत्तिः। पूर्वपदात्संज्ञायामिति रूढ्यर्थबोधपरत्व एव णत्वविधानात्। केवलयौगिकत्व इव लाक्षणिकत्वेपि रूढ्यर्थबोधपरत्वविरहादिति वाच्यम्। तस्य भगवत्सदृश

लाक्षणिकत्वात् सादृश्यप्रतियोगितया भगवतो बोधेन रूढ्यर्थबोधपरत्वानपायात्। कथमन्यथा युधिष्ठिरादि शब्दानां सादृश्य मात्रावलंबनेनान्यत्र प्रयुज्यमानानां साधुत्वोपपत्तिः यद्वा प्रकृतशाब्दबोधप्रयोजकीभूतरूढ्य धीनोपस्थितिजनकत्वं संज्ञात्वम् । तथा च लक्ष्यार्थोपस्थितिं प्राग्भाविरूढ्यधीनोपस्थितेरपि शाब्दबोधप्रयोज कत्वांक्षतेः लाक्षणिकस्यापि णत्वं सुवचमेव । केवलयोगाधीनशाब्दबोधे रूढ्यधीनोपस्थितेः प्रयोजकत्वविरहात् न केवलयौगिकस्य णत्वम् । इमामेवरीतिमनुसृत्य अग्नीषोमौ माणवकावित्यत्र प्रसिध्ददेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वे ईत्वषत्वे उपपादनीये। तत्र द्वन्द्वसमासजन्यसाहित्यावच्छिन्नाग्नीषोमात्मक प्रसिध्ददेवतोपस्थितेः प्रकृतशाब्दबोधप्रयोजकत्वात् सदृशला क्षणिकाग्निसोमपदयोः द्वन्द्वे तु द्वन्द्वजन्योपस्थितेः साहित्यावच्छिन्नप्रसिध्ददेवताविषयकत्वविरहात् न तत्र ईत्वषत्वे इतिस्पष्टं परिभाषेन्दुशेखरे । एवं विश्वामित्रजमदग्नीवसिष्ठेनास्पर्धेतामित्याद्यर्थवादस्य प्राशस्त्यलाक्षणिकत्वेपि मित्रेचर्षावित्यादेः प्रवृत्तिरुक्तरीत्यैव वर्णनीयेति दिक् । यदपि अन्यथा आकाशादिपदानां परब्रह्मपरत्वासिध्दिप्रसङ्गादिति। तदप्ययुक्तम्। आकाशादिपदानां परस्मिन्ब्रह्मणि रूढ्यभावेपि केवलयोगेन लक्षणया वा तत्परत्वोपपत्तेः परस्मिन्ब्रह्मणि रूढित्वासिध्यापादने तु इष्टापत्तिरेव। सिध्दान्ते केवलयोगेन शङ्करमते च गौण्या परब्रह्मपरत्वाङ्गीकारात् । उक्तंह्याकाशाधिकरणशङ्कर भाष्ये नचायं आकाशब्द उभयोस्साधारणश्शक्यो विज्ञातुम्। अनेकार्थत्वप्रसङ्गात् तस्मात् ब्रह्मणि गौण आकाशशब्द इति ! उक्तं च तद्व्याख्याने वाचस्पतिना सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययोः पौर्वापर्यपरामर्शात् प्रधानत्वेपि गौणतेति। यदपि निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वस्य पारिभाषिकत्वाभिधानं तदप्ययुक्तम्। समानग्रहणावगता-वधारणबलेनैव तल्लाभस्य भाष्यकैय्यटाद्यभिमतत्वात् । तथा हि समानपद इत्यनेन निमित्तनिमित्तिनोरेकपदस्थत्वमुच्यते। यद्येतावन्मात्रमेवेह विवक्षितं स्यात् तदा समानग्रहणानर्थक्यम्। पद इत्येतावन्मात्रेणैव एकवचनार्थएकत्वान्वयेन एकपदस्थत्वलाभात्। न च सूत्रे लिङ्गवचनमतन्त्रमिति परिभाषया वचनविवक्षा न संभवतीति वाच्यम्। अपदस्थयोर्निमित्तनिमित्तिनोरसंभवेन पदइत्यस्य वैय्यर्थ्यप्रसङ्गात्। पदग्रहणेनैव एकवचनविवक्षाज्ञापनात्। तथा सति एकपदस्थत्वलाभेन गीर्नमति रामो नम्य इत्यादिषु णत्ववारकतया पद इत्यस्य चारितार्थ्यसंभवात् । अथ समानशब्देन आधेयतानिरूपकत्वमेव बोध्यते । न त्वेकत्वसंख्या। वह्निना समानाधिकरणो धूम इत्यादिषु वह्निनिष्ठाधेयतानिरूपकाधिकरणवृत्तित्वस्यैव प्रतीतेः। तत्र प्रत्यासत्त्या रषाभ्यामित्यस्य तृतीयान्ततया अनुसन्धानान्तरकल्पनया वा आधेयतायां रेफषकारान्यतरनिष्ठत्वलाभः। तथा च रेफषकारान्यतरनिष्ठाधेयतानिरूपकपदवृत्तित्वस्य सप्तम्यन्तेन लाभात्। गीर्नमति रामो नम्य इत्यादिषु नकारे तदसत्वात् न णत्वम्। इत्थं च एवंविधार्थस्य एकत्वसंख्यावाचिना ऐकवचनेनालाभात्। कथं समानग्रहणवैय्यर्थ्यमिति चेन्न। समनाधिकरण इत्यादिषु एकाधिकरणवृत्तिरिति विवरणदर्शनेन समानशब्दस्याधेयतानिरूपकार्थकत्वविरहात्। एकाधिकरणवृत्तिरित्यत्र एकशब्दोपि आधेयतानिरूपकवचन इति तु न युक्तम्। मानाभावात्। तर्हि धूमो वह्निना समानाधिकरण इत्यादिषु धूमो वह्निनिष्ठाधेयतानिरूपकाधिकरणवृत्तिरिति प्रत्ययः कथमुपपद्यत इति चेदित्थंम्। वह्निनेत्यत्र तृतीयार्थोधिकरणवृत्तित्वं तस्य समानपदार्थतावच्छेदके एकत्वेन्वयः। तथा च वह्न्यधिकरणवृत्त्येकत्वाश्रयाधिकरणवृत्तिर्धूम इति अक्षरलभ्यार्थः। तत्र वह्न्यधिकरण

वृत्त्येकत्वाश्रयत्वस्य वह्निनिष्ठाधेयतानिरूपकत्वव्याप्यतया औत्तरकालिक एव तादृशाधेयतानिरूपकत्वप्रत्यय इति। न च तथापि समानग्रहणे तस्य एकान्वय्यधिकरणवृत्तित्वविषये नियताकांक्षतया प्रत्यासत्त्यादिना एकत्वे निमित्ताधिकरणवृत्तित्वलाभे तादृशैकत्वाश्रयपदवृत्तित्वस्य सप्तम्यन्तार्थस्य गीर्नमतीत्यादिष्वभावात् न दोषः। तद भावे तु एकवचनेन एकत्वलाभेपि तत्र निमित्ताधिकरण वृत्तित्वालाभात् कथं समानग्रहण वैय्यर्थ्यं इति वाच्यम्। सप्तम्यन्तार्थस्य एकपदवृत्तित्वस्य निमित्तमात्रे अन्वये वैय्यर्थ्यतादवस्थ्येन निमित्त निमित्तिनोरुभयत्रान्वयस्यस्वीकरणीयतया निमित्तनिमित्तिनोरेकपदवृत्तित्वलाभात्। गीर्नमतीत्यादिषु तदभावेन अनुपपत्तिविरहात्। न च तत्रापि प्रत्येकमेकत्वसत्वात्। निमित्ते निमित्तिनि च एकत्वसंख्याश्रयपदवृत्ति त्वाक्षतेः कथं वारणमिति वाच्यम्। स्वसजातीयनिष्ठ भेदप्रतियोगिनानवच्छेदक एकत्वरूपस्वसजातीयद्वितीय राहित्यस्यैव एकवचनार्थत्वात् एकत्वमात्रस्य सर्ववस्तुसाधारणस्याव्यावर्तकतया तदसंभवात्। पशुना यजेतेति विहितस्य एकत्वस्यानेकपशुभिर्यागानुष्ठानेप्यवैकल्यप्रसङ्गात् च। साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्व विशिष्टस्वप्रकृत्यर्थतावच्छेदकरूपेण। प्रकृते च स्वसमभिव्याहृतपदार्थः निमित्तनिमित्युभयं तत्संसर्गित्वं तदधिकर णत्वं स्वप्रकृत्यर्थतावच्छेदकंच पदत्वमिति स्ववृत्तिनिमित्तनिमित्यु भयाधिकरणपदत्ववन्निष्ठ भेदप्रतियोगि तानवच्छेदक एकत्वमेव एकवचनार्थः। इत्थं च गीर्नमतीत्यादिषु क्वचिदपि ईदृशैकपदस्थत्वासत्वान्न दोषः। न चैवं सति एकवचनस्य नानार्थत्वप्रसङ्गः। द्व्येकयोरित्यादिशास्त्रस्वारस्य विरोधश्च इति वाच्यम्। यतः एकत्वत्वावच्छिन्न एव एकवचनस्य शक्तिः। इतरांशस्तु संसर्गमर्यादयैव भासत इत्यङ्गीक्रियते तथा हि पशुना यजेनेत्यत्र एकवचनार्थस्य एकत्वस्य स्ववृत्ति भेदप्रतियोगितावच्छेदकतासंबन्धेन पशावन्वयः अवच्छेदकता च स्वकरणकयागकरणीभूतपशुनिष्ठ भेदप्रतियोगितावच्छेदकतासंबंधावच्छिन्ना। अनेकपशुभिर्यागकरणे च तत्तदेकत्वानां स्वकरणकयागकरणी भूतपश्वन्तरनिष्ट भेदप्रतियोगितावच्छेदकतया तादृशावच्छेदकतासंबन्धेन पशुमदभिन्नत्वं कुत्राप्येकत्वे न संभवतीति नोक्तदोषः। प्रकृते चा वच्छेदकता स्ववृत्ति निमित्तनिमित्त्युभयाधि करणपदत्ववन्निष्ठ भेदप्रतियोगितावच्छेदकतासंबन्धावच्छिन्ना ग्राह्येति। गीर्नमतीत्यादिषु कस्यापि पदस्य दर्शितसंबन्धेन एकत्ववत्वविरहान्न दोष इति। तत्सिद्धं पद इत्येतावतैव सामञ्जस्ये समानग्रहण वैय्यर्थ्यमिति। रामनामादावनुपपत्तिस्तु पक्षद्वयेपि समाना। अतः समानग्रहणं समानमेव पदमित्यवधारणार्थं विज्ञायते। उक्तावधारणेन च किंचिदंशेनाप्यसमानं निमित्तानधिकरणनिमित्तिमन्नभवतीत्यर्थलाभात्। निमित्ता नधिकरणनिमित्ति मत्पदाघटितत्वं पर्यवस्यति। यद्वा समानमेव पदं यस्मिन्समुदाये तत्तथेति बहुव्रीह्याश्रयणेन असमानं निमित्तानधिकरणं निमित्तिमत्पदं यदघटकमिति विग्रहवाक्यार्थे लब्धे निमित्तानधिकरणनिमित्ति मत्पदाघटितत्वं समासवाक्यार्थो भवति। सर्वथा योगलभ्यतया नास्यार्थस्य पारिभाषिकत्वम्। यत्समानाधि करणा इत्यादिव्याप्तेरव्यभिचरितत्वपदप्रतिपाद्यत्ववत् केवलतान्त्रिकसंकेतरूपपरिभाषया समानपदलभ्यत्व एव पारिभाषिकत्वाभिधानं युज्यत इति। अत्र निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वं च रेफषकारान्यतरा वृत्तिन कारवृत्तिपदत्वासमानाधिकरणसमुदायत्ववत्वम्। तथा च रेफषकारान्यतराधिकरणं यत्तादृशसमुदायत्वा वच्छिन्नं तत्वृत्तित्वं समानपद इति सप्तम्यन्तार्थः तस्य च रेफषकारान्यतरवृत्तितादृश समुदायत्वाश्रयत्वे पर्यवसानम्। तथा च अटूकुप्वाङित्यादेः रेफाद्युत्तराडादिभिन्नानुत्तरस्य रेफाद्युत्तरस्य रेफाद्यवृत्तिनकारवृत्ति पदत्वासमा

नाधिकरणं यद्रेफादिवृत्तिसमुदायत्वं तदाश्रयस्य नस्य णत्वं स्यादित्यर्थः आदर्शेनेत्यादौ णत्ववारणायानुत्तरत्वान्तनिवेशः। रामेणेत्यादौ तदुपपत्तये अडादिभिन्नेति। नारीत्यादौ तद्वारणाय रेफाद्युत्तरत्वनिवेशः। रामनामादौ तद्वारणाय रेफाद्यवृत्तीत्यादि। रामनामादिगतसमुदायत्वस्य च रेफाद्यवृत्ति यन्नामपदनिष्ठं पदत्वं तदसमानाधिकरणत्वविरहान्न दोषः। असंभववारणाय रेफाद्यवृत्तीति। मातृभोगीण इत्यत्र भोगपदवृत्तिपदत्वमादायानुपपत्तिवारणाय नकारवृत्तीति। यद्यपि प्रत्ययमात्रवृत्तिसमुदायत्वं भोगपदवृत्तिपदत्वासमानाधिकरणमेव। तथापि तस्य रेफादिवृत्तित्वविरहान्न तदादायोपपत्तिः। वस्तु तस्तु तादृशसमुदायत्वे रेफादिवृत्तित्वस्य सूत्रलभ्यत्वेपि प्रयोजनविरहेणाविवक्षिततया इह नकारवृत्तित्वमनुपादेयमेव। रेफाद्यवृत्तिपदत्वासमानाधिकरण धर्मवत्त्वमात्रं नकारे निवेश्यम्। मातृभोगीणादौ प्रत्ययमात्रवृत्तिसमुदायत्वं नकारवृत्तितद्व्यक्तित्वमेववा आदाय तदुपपत्तिः। नचैवमपि रामनारीत्यत्र णत्वापत्तिः। नारीशब्दवृत्तिपदत्वस्य रेफवृत्तितया रेफाद्यवृत्तिपदत्वासमानाधिकरण धर्मवत्त्वस्य नकारे सत्वादिति वाच्यम्। यादृशरेफाद्युत्तरत्वं नकारस्य तादृशरेफाद्यवृत्तिपदत्वासमानाधिकरण धर्मवत्वस्य विवक्षिततया दोषविरहात् स्वोत्तराडादिभिन्नानुत्तरत्वस्वोत्तरत्वस्वावृत्तिपदत्वासमानाधिकरण धर्मवत्व एतत्त्रितयसंबन्धेन रेफादिविशिष्टस्य नस्य णत्वं स्यादिति तु निष्कर्षः। स्वोत्तराडादिभिन्नानुत्तरत्वं च स्वोत्तराडादिभिन्नोत्तरत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक भेदवत्वरूपं। स्वावृत्तिपदत्वासमानाधिकरण धर्मवत्वं च स्वविशिष्टधर्मवत्वरूपम्। धर्मे स्ववैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेन। स्वनिष्ठावच्छेदकता च स्वविशिष्ट पदत्वसमानाधिकरणत्व संबन्धेन। पदत्वे स्ववैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताक भेदवत्त्वसंबन्धेन। स्वनिष्ठावच्छेदकताचाधेयता संबन्धेन। अथ वा निमित्तिमत्पदाघटितत्वमात्रं ग्राह्यम्। तच्च नकारवृत्तिपदत्वनिष्ठन्यूनवृत्तितानिरूपकभिन्न समुदायत्वं रेफादिवृत्तितादृशसमुदायत्वानाश्रयत्वं समानपद इति सप्तम्यन्तार्थः। तन्निष्ठन्यूनवृत्तितानिरूपकत्वं च स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्य उभयसंनन्धेन तद्विशिष्टत्वम्। गीर्नमतीत्यादिषु नमस्यादिगत समुदायत्वस्य पदत्वनिष्ठ न्यूनवृत्तितानिरूपकभिन्नतया तद्वारणाय समुदायत्वे रेफादिवृत्तित्वनिवेशः। रामनामादिगतसमुदायत्ववारणाय भिन्नान्तनिवेशः। मातृभोगीणादौ तादृशसमुदायत्वस्य भोगपदवृत्तिपदत्वनिष्ठ न्यूनवृत्तितानिरूपकतया तत्संग्रहाय नकारवृत्तीति। रामनारीत्यादौ णत्ववारणप्रकारः प्रागुक्तदिशा ज्ञेयः। अनुगमे स्ववृत्तिसमुदायत्ववत्त्वं तृतीयसंबन्धः। स्ववृत्तित्वं स्वरूपसंबन्धेन। समुदायत्ववत्वं च स्वरूय आधेयत्व उभयसंबन्धेन। आधेयता च स्वनिष्ठावच्छेदकताकप्रतियोगिताक भेदवत्वसंनन्धेन। अवच्छेदकता च स्ववृत्ति पदत्वविशिष्टत्वसंबन्धेन। वृत्तिस्वरूपसंबन्धेन पदत्ववैशिष्ट्यं च स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्य उभयसंबन्धेन। यद्वा समानएव पदे न तु भिन्न इति रीत्या निमित्तानधिकरणनिमित्तिमत्पदावृत्तित्वं सप्तम्यन्तसारार्थः। रेफाद्यवृत्तिपदत्वानाश्रयत्वमिति तु निष्कर्षः। अनुगमे च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वं तृतीयसंबन्धः। स्वनिष्ठावच्छेदकता च स्वविशिष्टपदत्वाश्रयत्वसंबन्धावच्छिन्ना। पदत्वे स्ववैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेन। स्वनिष्ठावच्छेदकताच आधेयतासंबन्धेनेत्यलम्। यदपि निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वस्य सामानपद्यरूपत्वेपि उत्तरपदत्वे चेत्यादिवार्तिकेनायनशब्दस्य प्रत्ययलक्षणनिषेधात् पदत्वविरहेण सामानपद्योपपत्त्या णत्वोपपत्तिरिति तदप्ययुक्तम्। उक्तवार्तिकेन णत्वविधौ

प्रत्ययलक्षणानिषेधात् उत्तरपदनिष्ठं यत् पदत्वं तत्प्रयुक्तापदादिविधावेवहि अनेन प्रत्ययलक्षणं निषिध्यते । णत्वप्रवृत्तिस्थले च उत्तरपदस्य न पदत्वं संभवति । उत्तरपदस्य पदत्वे सामानपद्यविघटनेन णत्वप्रवृत्त्यसंभवात् । अतो दूरत एव णत्वस्य उत्तरपदनिष्ठपदत्वप्रयुक्तत्वमिति कथमुक्तवार्तिकस्य णत्वविधौ प्रवृत्तिः । वार्तिके हि उत्तरशब्दः उत्तरपदपरः । उत्तरस्य पदत्वमिति व्युत्पत्या तन्निष्ठपदत्वलाभः । सत्सप्तम्या प्रयुक्तत्वबोधः । पयः पाने सति पिपासा शाम्यतीत्यादिषु तथा दर्शनात् अथनिमित्तिमत्पदत्वस्य णत्वप्रयोजकत्वं निर्विवादम् । तस्य णत्वविध्युद्देश्यतावच्छेदकघटकत्वात् । उद्देश्यतावच्छेदकघटकत्वस्यैव ईदृशस्थले प्रयोजकत्वरूपताया वक्ष्यमाणत्वात् । तथाच निमित्तानधिकरणनिमित्तिमत्पदत्वत्वेन रामनामाद्यन्तर्गत उत्तरपदवृत्तिपदत्वस्यापि प्रयोजकत्वाक्षतेः णत्वस्य उत्तरपदवृत्तिपदत्वप्रयुक्तत्वमव्याहतमिति तत्रोक्तवार्तिकप्रवृत्तिनिराबाधैव । न च उद्देश्यतावच्छेदकीभूताभाव प्रतियोगिकोटिनिविष्टत्वेन तत्र न प्रयोजकत्वव्यवहारः । मणित्वादौ कारणतावच्छेदकघटकत्वेपि दाहादिप्रयोजकत्वाव्यवहारवत् । तथा च तद्व्यावृत्तमेव प्रयोजकत्वं निर्वाच्यम् । तन्निरूपत्वरूपं प्रयुक्तत्वमेव सत्सप्तमीबोध्यमिति कथमुक्तवार्तिकस्य तत्र प्रवृत्तिरिति वाच्यम् । उद्देश्यतावच्छेदकी भूताभाव प्रतियोगिकोटिनिविष्टेपि प्रयोजकत्वव्यवहारसत्वेन णत्वस्य उत्तरपदवृत्तिपदत्वप्रयुक्तत्वाक्षतेः नकारस्य निमित्तानधिकरणनिमित्तिमत्पदाघटितवृत्तित्वे णत्वमितिवत् स्वावच्छिन्नाघटितवृत्तित्वसंबन्धेन निमित्तानधिकरण निमित्तिमत्पदत्ववत्वे णत्वमित्यपि व्यवहारोदृश्यत एव । पूर्ववृत्तौ दण्डत्ववत्वे घटोत्पत्तिरितिवत् पूर्ववृत्यभावे स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन मणित्ववत्वे दाहोत्पत्तिरित्यपि व्यवहारोस्त्येव । तथा च णत्वविधौ वार्तिकं प्रवर्तत एवेति चेदुच्यते । वार्तिके सत्सप्तम्याः प्रयोजकत्वमात्रार्थकत्वे माषकुम्भवापेनेत्यत्र पदव्यवायेपीति णत्वनिषेधानुपपत्तिप्रसङ्गः । तथाहि पदव्यवायेपीत्यनेन निमित्तोत्तरपदोत्तरनकारोद्देशेन णत्वाभावविधानात् कुम्भशब्दवृत्तिपदत्वस्य उद्देश्यतावच्छेदकघटकतया णत्वाभावस्य उत्तरपदवृत्तिपदत्वप्रयुक्तत्वमक्षतमिति । तद्विषये उक्तवार्तिकेन प्रत्ययलक्षणनिषेधे कुम्भशब्दादेः पदत्वासंभवात् पदव्यवधानसंभवेन णत्वनिषेधो न प्रवर्तेत । अतो नेह सप्तम्याः प्रयुक्तत्वमात्रमर्थः । किन्तु सामानाधिकरण्यमपि । गुणकर्मान्यत्वे सति सत्वातित्यत्र सामानाधिकरण्यरूपवैशिष्ट्यार्थकतायास्तान्त्रिकैरुक्तत्वात् । पयःपाने सति पिपासा शाम्यतीत्यादौ सामानाधिकरण्यप्रयुक्तत्व उभयभानस्यैवानुभाविकत्वाच्च इत्थं च उत्तरपदनिष्ठं यत्पदत्वं तत्सामानाधिकरण्यतत्प्रयुक्तत्व उभयवत्यपदादिविधौ प्रत्ययलक्षणन्नेत्यर्थात् णत्वविधौ उक्तवार्तिकप्रवृत्तिः दुर्घटा । णत्वस्य उदासीनोत्तरपद निष्ठपदत्वप्रयुक्तत्वेपि तत्सामानाधिकरण्यविरहात् । अत्र तादृशपदत्वसामानाधिकरण्यमात्रादरणे माषकुम्भवापेनेत्यादौउक्तदोषस्यैव प्रसङ्गः । समस्तसमुदायगतपदत्व सामानाधिकरण्यस्य णत्वनिषेधे सत्वात् । तादृश पदत्वस्य उत्तरपदवृत्तित्वाच्च । तध्दि समुदायपर्याप्तमपि आश्रयतया उत्तरपदे विवर्तते । अतः प्रयुक्तत्व निवेशः । तथा सति दर्शितसमुदायगतपदत्वस्य णत्वनिषेधोद्धेश्यतावच्छेदकघटकत्वविरहेण तत्प्रयुक्तत्वासंभवान्न दोषः । स्वप्रयुक्तत्व स्वसामानाधिकरण्य उभयसंबंधेन तादृशपदत्वविशिष्ट अपदादिविधाविति तु निष्कर्षः । तेन दर्शितस्थले समुदायगतपदत्वमादाय सामानाधिकरण्यं कुम्भशब्दगतं तदादाय प्रयुक्तत्वं चोपपाद्य अनुपपत्यापादनं निरस्तम् । यद्यपि परमवाचा परमलिहेत्यादौ वस्तुतः कुत्वडत्वादेरप्रवृत्त्या तस्योत्तरपदत्वविशिष्ट

त्वन्नोपपद्यते । तथापि तादृशपदत्वविशिष्टत्वसंभावनाविषयत्वमेव ग्राह्यमिति न दोषः संभावना च परमवाचे त्यादौ उत्तरपदस्य पदत्वमाश्रित्य कुत्वे कृते तदुत्तरपदत्वविशिष्टं भवेदित्याकारको ज्ञानविशेषः । स च मुनिनिष्ठएव ग्राह्यः । तेन पुरुषान्तरीयज्ञानस्यातिप्रसञ्जकत्वेपि न क्षतिः । तत्सिध्दं णत्वविधानुक्तवार्तिकं न प्रवर्तत इति । ननु निमित्तानधिकरणेत्यादेः नकारवृत्तिपदत्वनिष्ठन्यूनवृत्तितानिरूपकभिन्नसमुदायत्वमर्थः । ततश्चाट्कुप्वाङित्यादेः तादृशसमुदायत्वाश्रयनकारोद्देशेन णत्वविधायकतया नकारवृत्तिपदत्वस्य उद्देश्यता वच्छेदकघटकतया णत्वप्रयोजकत्वं अविवादम् । तच्च नारायण इति समस्तसमुदायगतपदत्वरूपम् । ततश्च णत्वे तत्प्रयुक्तत्वतत्सामानाधिकरण्ययोस्सत्वात् तत्रोक्तवार्तिकप्रवृत्तेरबिधात इति चेन्न । निमित्तानधिकरण पदावृत्तित्वस्य रेफाद्यवृत्ति पदत्वानाश्रयत्वपर्यवसितस्यैव सप्तम्यन्तार्थस्य लाघवेनादरणीयत्वात् दर्शितसमुदायगत पदत्वस्य रेफाद्यवृत्तित्वविरहेण णत्वविधेस्तथात्वासंभवात् । किञ्च उत्तरपदत्वावच्छिन्न पर्याप्तिक पदत्वमेवा वश्यं निवेश्यम् । अन्यथा परमगोमानित्यादौ संयोगान्तलोपानुपपत्तेः तत्र समस्तसमुदायगतपदत्वस्यापि प्रागुक्तरीत्या उत्तरपदवृत्तित्वानपायेन संयोगान्तलोपे तत्प्रयुक्तत्वसामानाधिकरण्ययोः सत्वात् । उत्तरपदत्वा वच्छिन्नपर्याप्तिकत्वनिवेशे च न दोषः । समुदायगतपदत्वमाश्रित्यैव संयोगान्तलोपप्रवृत्तेः । तथा च कथमुक्त वार्तिकस्य णत्वविधौ प्रवृत्तिशंकापि । यद्यप्येवं सति माषकुम्भावापेनेत्यत्र समुदायगतपदत्वमादायानुपपत्तेर प्रसरात् प्रयुक्तत्वनिवेशस्य प्रागुपदर्शितं प्रयोजनं न संभवति । तथापि परमगोमानित्यत्र उत्तरपदमात्रस्य प्रत्यय लक्षणेन पदत्वमाश्रित्य सामानाधिकरण्योपपादन संभवात् । संयोगान्तलोपानुपपत्तिवारणाय प्रयुक्तत्वनिवेशः। तत्र समुदायगतपदत्वमाश्रित्यैव लोपप्रवृत्त्या न दोषः । वस्तुतस्तु प्रयुक्तत्वानिवेशेपि प्रकृतनिर्वाहात् तत्सार्थ क्यवर्णनमनावश्यकमेव णत्वस्य उत्तरपदत्वावच्छिन्नपर्याप्तिकपदत्वसामानाधिकरण्यासंभवादेव वार्तिकाप्रवृत्त्युप पत्तेः । अथैवं रीत्या वार्तिकार्थवर्णने परमविदुषेत्यादौ षत्वानुपपत्तिः । अपदान्तस्य मूर्धन्य इत्यनुवृत्तिसहितेन इण्कोरित्यनेन विधीयमानस्य षत्वस्य उत्तरपदत्वावच्छिन्नपर्याप्तिकपदत्वसामानाधिकरण्यासंभवेन तत्र उक्त वार्तिकाप्रवृत्तौ प्रत्ययलक्षणसंत्वेन सस्यापदान्तत्वासंभवात् । अत इत्थं वक्तव्यम् उक्तपदशब्दः समासचर मावयवपरः वैय्याकरणैः तस्य तत्र रूढत्वाङ्गीकारात् सत्सप्तम्याश्च सामानाधिकरण्यमर्थः । तच्चाश्रयत्व उद्देश्यत्वोभयघटितम् । तथाच उत्तरपदत्वाश्रयोद्देश्यको योयमपदाधिविधिः तद्विषये प्रत्ययलक्षणंनेति वार्तिकार्थः । उत्तरपदत्वस्य समुदाय पर्याप्तत्वेपि तद्घटकवर्णेषु स्वरूपसंबन्धेन तदाश्रयत्वमक्षतमिति उत्तरपद घटकवर्णोद्देश्यकविधिसंग्रहः । ततश्चपरमविदुषेत्यादौ षत्वस्य तादृशत्वानपायात् तत्र प्रत्ययलक्षणनिषेधोपपत्तिः माषकुप्यवापेनेत्यादौ णत्वनिषेधस्यचा तथात्वान्न तत्र प्रत्ययलक्षणनिषेधः । इत्थं च णत्वविधेरपि तादृशतया तत्र प्रत्ययलक्षणनिषेधोपपत्तिरितिचेन्न यत एवं सति परमयुवयोगिनेत्यादौ पदव्यवायेपीति निषेधानुपपत्तिः तस्य तादृशतया युवशब्दस्य प्रत्ययलक्षणनिषेधात् । अतः अपदादिविधिशब्दस्य पदान्तत्वप्रयुक्तविधिपरत्वमेव समाश्रयणीयम् । तथा च णत्वनिषेधस्यातथात्वान्नदोषः । इण्कोरिति षत्वोद्देश्यतावच्छेदककोटौ पदान्तत्वस्य घटकतयातस्यापि पदान्तत्वप्रयुक्तत्वात् परमविदुषेत्यादौ नानुपपत्तिः । इत्थं च णत्वविधेः पदान्तत्वा प्रयुक्ततया न तत्र वार्तिकप्रवृत्तिरिति । न च यादृशोत्तरपदघटकवर्णोद्देश्यकः विधिस्तस्यैवानेन प्रत्ययलक्षण निषेधाङ्गीकारात् नोक्तानुपपत्तिः । युवशब्दस्य कार्यभाक्त्वविरहेण प्रत्ययलक्षणसत्वात् । तथाचापदादिविधि

शब्दस्य दर्शितार्थकताया अनाश्रयणीयतया णत्वविधौ वार्तिकप्रवृत्तेरविघात इति वाच्यम्। पदे व्यवाय इति सप्तमीसमासपक्षे परमयुवयोगिनेत्यादौ णत्वनिषेधानुपपत्तिपरिहारायापदादिविधिशब्दस्य उक्तार्थकताया आवश्यकत्वात्। तथाहि आर्द्रगोमयेण शुष्कगोमयेणेत्यदौ पदव्यवायेपीति निषेधवारणाय अतध्दित इति वक्तव्यमित्युक्तम् वार्तिककृता। तत्प्रत्याचिख्यासयाच पदे व्यवाय इति सप्तमी समासपक्षस्समाश्रितो भाष्यकृता। तत्र व्यवधानं प्रत्यासत्या पञ्चमतमेव ग्राह्यम्। तेन चतुर्बहुङ्गेणेत्यत्र पदपरकबहुच्प्रत्ययेन व्यवधानेपि न दोषः। पदपरकं यत्पदं तेन व्यवधान इति तु निष्कर्षः। तथा च आर्द्रगोमयेण शुष्कगेमयेणेत्यादौ गोपदस्य पदपरकत्वविरहान्न दोषः। इत्थं च परमयुवयोगिनेत्यत्र योगिन्नित्यस्य कार्यभागुत्तर पदरूपस्य प्रत्ययलक्षणनिषेधे युवशब्दस्य पदपरकत्वासंभवात् णत्वनिषेधानुपपत्तिः। अतः पदान्तत्वप्रयुक्तविधिपरत्वमकामे नापि स्वीकार्यमिति। एतेन उत्तरपदस्य पदसंज्ञायां प्रत्ययलक्षणं न। पदादिविधौ तु उक्तनिषेधेन नेति वार्तिकार्थः कार्यभाज उत्तरपदस्येवानेन प्रत्ययलक्षणनिषेधाङ्गीकारात् न माषकुम्भवापेनेत्यादौ णत्वनिषेधानुपपत्तिः। तथा च णत्वविधावपि वार्तिकप्रवृत्तिरव्याहतैवेत्यपास्तम्। परमयुवयोगिनेत्यादौ पदे व्यवाय इति सप्तमीसमासपक्षे णत्वनिषेधानुपपत्तेर्दुर्वारत्वात् प्रसज्यप्रतिषेधाश्रयणे वाक्यभेदाद्यापत्तेश्च। अतः पर्युदासमाश्रित्यापदादिविधिशब्दस्य पदान्तत्वप्रयुक्तविधिपरत्वमेवाङ्गीकरणीयमिति। न च माषकुम्भवापिनेत्यादौ गतिकारकोपपदानामितिपरिभाषया सुबुत्पत्तेः प्रागेव समासात् सप्तमीसमासपक्षे तत्रानुपपत्तिवारणाय पदशब्दस्य पदत्वयोग्यपरत्वमावश्यकम्। इत्थं च प्रागुक्तस्थले प्रत्ययलक्षणनिषेधेपि क्षतिविरह इति वाच्यम्। उक्तपरिभाषाया अनित्यत्वेन दर्शितस्थले सुबुत्पत्यनन्तरमेव समासाङ्गीकारेण पदशब्दस्य पदत्वयोग्यलाक्षणिकतायां मानाभावात्। अस्या अनित्यत्वं च उपपदमतिङति सूत्रे कैय्यटे स्पष्टम्। तत्र हि कर्तृकरणे कृता बहुलमिति बहुलग्रहणात् गतिकारकोपपदानामिति परिपाषाया अनित्यत्वं ज्ञाप्यते। तेन धनक्रीतादि सिध्दिरित्युक्तम्। यद्यपि उक्तपरिभाषा नित्यैव। धनक्रीतादिस्त्वजादित्वाङ्गीकारेण साधनीय इत्येव भाष्यकाराशयः। अत एव दधिसेचावित्यादौ उपपदसमासे सात्पदाद्योरिति निषेधोपपत्तये भाष्ये पदादादिरिति पञ्चमी समासाश्रयणमुपपद्यते। अन्य था सुबुत्पत्यनन्तरमेव तत्रापि समास संभवात् तदसङ्गतिस्पष्टैव। तथापि वार्तिककृतस्तदनित्यत्वमेव सम्मतम्। अन्यथा अपदादिविधावित्यभिधानानुपपत्तेः। दधिसेचावित्यादौ षत्वस्य उक्तरीत्यैव उपपादनीयत्वात्। ततश्च तत्पक्ष एवापदादिविधावित्यस्य सत्वात् तस्य उक्तरीत्या पदान्तत्वप्रयुक्तविधिपरत्वमावश्यकमेवेति। अथापदादिविधिशब्दस्य कथं पदान्तत्व प्रयुक्तविधिपरत्वमितिचेन्न नञीवयुक्तपरिभाषाबलादिति ब्रूमः। तथा हि अपदादिविधावित्यत्र नञो न भिन्नमात्रमर्थः। अपि तु भिन्नसदृशं नञीवयुक्तं अन्यसदृशाधिकरणे तथा ह्यर्थगतिरिति न्यायात् सादृश्यंचेह स्वघटितपदघटकवर्णनिरुपितपूर्वत्वतादृशवर्णनिरुपितोत्तरत्व उभयवदवृत्तिधर्मप्रयुक्तविधित्वेन। स च धर्मः पदादित्वं पदान्तत्वं चेति पदान्तत्वप्रयुक्त-विधिरेव उक्तरूपेणापदादिविधि सदृश इति स एवापदादिविधिशब्दार्थः। न च उक्तरूपेणैव सादृश्यमादरणीयमित्यत्र नियामकाभावः। पदत्वप्रयुक्तविधित्वेनापि सादृश्यसंभवादिति वाच्यम्। व्याप्यधर्मप्रयुक्तसादृश्यसंभवे व्यापकधर्मप्रयुक्तस्य तस्यानाश्रयणीयत्वात्। अन्यथा सर्वत्र केनचिदाकारेण सादृश्यस्यावर्जनीयतया तस्य नञर्थतावच्छेदकतास्वीकारस्याव्यावर्तकतापत्या दर्शितन्यायोपपादनपरभाष्यासंगति प्रसंगात्। अत एव वे

स्कन्देरनिष्ठायामिति षत्वविकल्पः कुत्वेन सादृश्यात् तृच्येव नतिङीत्युपपद्यते। अन्यथाहि प्रत्ययत्वेन सादृश्यात् तिङ्यपि तदापत्तिः। तथा च व्याकरणे परिभाषासंस्कृत वाक्यार्थस्यैव समाश्रयणीयतया संप्रतिपन्नप्रयोजनान्तरविरहेपि अपदादिविधिशब्दस्य उक्तपरिभाषाबलेन पदान्तत्वप्रयुक्तविधिपरत्वमेव समाश्रयणीयम्। प्रकृते तु माषकुम्भवापिनेत्यत्र णत्वनिषेधोपपत्तिरूपप्रयोजनस्याप्यस्माभिरुपपादिततया अपदादिविधिशब्दस्य पदान्तत्वप्रयुक्तविधिपरत्वं सुदृढमेवेति। अथ किमिदं पदान्तत्वप्रयुक्तत्वम्। न तावज्जन्यजन्यतावच्छेदकादावनुभूयमानस्वरूपसंबन्धविशेषः। कुत्वादेः पदान्तत्वजन्यात्तदवच्छेदकत्वाद्यसंभवात्। नापि पदान्तत्वव्यापकत्वम्। राम इत्यादौ विसर्जनीये पदान्तत्वाश्रये कुत्वविरहात। नापि तद्व्याप्यत्वम्। वक्तीत्यादौ कुत्वाश्रये पदान्तत्वविरहात् इति चेत् उच्यते। पदान्तत्वघटित धर्मावच्छिन्नोद्देश्यताकशाब्दबोधविधेयत्वतात्पर्यविषयत्वमेव तत्। उद्देश्यतावच्छेदकघटक एव वैय्याकरणानां प्रयोजकत्वव्यवहारात्। अन्यस्य दुर्वचत्वाच्च। चोः कुरित्यादिषु झल्परकत्वपदान्तत्वान्यतरवच्च वर्गोद्देशेन कुत्वविधानात् तस्य पदान्तत्वप्रयुक्तत्वोपपत्तिः। यद्यपि चोः कुरित्यादौ षष्ठी स्थानेयोगेति परिभाषया स्थान इत्यध्याहार्यम्। स्थानं च प्रसङ्गः। यदि चोः कुरित्यादि शास्त्रन्नारभ्येत तदा वागित्यादौ वकारआकारोच्चारणाव्यवहितोत्तरक्षणः चवर्गोच्चारणाधिकरणं स्यादित्याकारकः पाणिन्यादिसमवेतो ज्ञानविशेषः चोः कुरित्यत्र षष्ठ्यर्थः उच्चारणाधिकरणत्व प्रकारतानिरूपकत्वं प्रसङ्गत्वेति। स्थानपदोत्तर सत्सप्तम्याश्चाधिकरण क्षणवृत्तित्वरूपं सामानाधिकरण्यमर्थः। अधिकरणता च विशेष्यतासंबन्धेन। वृत्तिश्च स्वोच्चारणाधिकरणत्वसम्बन्धेन। तथाच चोः कुरित्यादितः कवर्गादिविशेष्यक चवर्गोच्चारणाधिकरणत्व प्रकारकप्रसङ्गविशेष्य क्षणवृत्तित्वप्रकारक एव बोधः। तथापि अत्र चवर्गोद्देशेन कवर्गो विधीयत इत्यादि व्याख्यातृ व्यवहारात् चवर्गोद्देश्यककवर्गविधेयकबोध एव पाणिनेस्तात्पर्यमिति दर्शितसूत्रजन्यबोधस्य चवर्गोद्देश्यतानिरूपितकवर्गविधेयताकत्वमेवाश्रयणीयम्। उद्देश्यत्वविधेयत्वेहिनविशेष्यत्व प्रकारत्वरूपे किन्तु विलक्षणे एव विषयते। अत एव पर्वते वह्निरित्यनुमितेरपि पर्वतोद्देश्यतानिरूपितवह्निविधेयताकत्वमेवाङ्गीकृतं तान्त्रिकैः। तस्मात्पदान्तत्वघटित धर्मावच्छिन्नोद्देश्यताकशाब्दबोधविधेयत्वतात्पर्य विषयत्वं कवर्गे निर्बाधमेव। विधेयतावच्छेदकसंबन्धश्च स्वोच्चारणाधिकरणक्षणविशेष्यकप्रसङ्गप्रकारिताधिकरणताकोच्चारणकर्मत्वरूपः। एवं च झल्परकत्वपदान्तत्वान्यतरवच्चवर्गोच्चारणं यस्मिन्क्षणे प्रसक्तं तस्मिन्क्षणे कवर्गोच्चारणं कर्तव्यमित्युक्तं भवति। तत्सिध्दं नञिव युक्तपरिभाषाबलेन अपदादिविधिशब्दस्य पदान्तत्वप्रयुक्त विधिपरत्वमिति। किञ्चापदादिविधिशब्दस्य दर्शितार्थपरतामनङ्गीकृत्य णत्वविधावपि वार्तिकप्रवृत्तिस्वीकारे गन्धर्वगानादीनां क्षुभ्नादित्वस्य कल्पनीयतया गौरवम्। अतस्तत्परिहाराय उक्तरीत्या णत्वविधावप्रवृत्ति वर्णनमेव युक्तम्। एवं णत्वविधावुक्तवार्तिकप्रवृत्तौ प्रनिरन्तरित्यादिसूत्रवैय्यर्थ्यम्। प्रवणादिषु अट्कुप्वाङित्यनेनैव णत्वसिध्देः। अथ अट्कुप्वाङित्यनेन प्राप्तावपि वनं पुरगेतिनियमेन संज्ञारूपे प्रवणादौ असिपत्रवनादाविव णत्वनिवृत्तौ पुनः प्रापणार्थोयं विधिः। एवं शरादीनामोषधिवनस्पत्यन्यतररूपतया विभाषौषधि वनस्पतिभ्य इत्यनेन विकल्पे प्राप्ते नित्यार्थश्च। अतो नास्य वैय्यर्थ्यमिति चेदेवमपि वनं पुरगेति सूत्रे अग्रग्रहणवैय्यर्थ्यं दुष्परिहरमेव। अग्रेवणे अट्कुप्वाङित्यनेन णत्वोपपत्तेः। न च वननकारस्य यदि णत्वं तर्ह्यग्रोत्तरस्यैवेत्येवंविधनियमार्थमग्रग्रहणम्। तेन चित्रवनादिव्यावृत्तिरिति वाच्यम्। त्रैदोष्यापादकनियमपर-

त्वस्यान्याय्यत्वात् । उक्तवार्तिकस्य णत्वविधावप्रवृत्तौ तस्य विधिपरत्वसंभवात् । यद्यप्यपूर्वविध्यपेक्षया नियम एवाभ्यर्हितः पक्षप्राप्तनियमनमात्रे विधेर्व्यापारात् । अत एव पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इत्यत्र प्रागुक्त मादह्नः पक्षप्राप्तपत्नीसंयाजान्त संस्थानियामकत्वमेव नतूत्तमेहनि अप्राप्तपत्नीसंयाजान्तत्वप्रापकत्वं इत्युक्तं दशमे । तथापि पञ्च पञ्चनखा भक्ष्या इत्यादौ पातञ्जल भाष्ये नियमव्यपदेशात् परिसंख्याविधिरपि वैय्याकर णैर्नियमविधिरिति व्यवह्रियते । तथाच प्रागुक्तरीत्या वननकारस्य यदि णत्वं तर्ह्यग्रोत्तरस्यैवेत्येवंविधनियमस्य प्राप्तपरिसंख्यारूपतया स्वार्थत्यागपरार्थस्वीकारप्राप्तबाधरूपदोषत्रयमावश्यकमेव । तथाहि अग्रशब्दोत्तरवन न कारस्य णत्वं स्यादिति स्वार्थः स च त्यक्तव्यः । अट्कुप्वाङित्यनेनैव तस्य प्राप्तत्वात् । अप्राप्तेहि शास्त्रमर्थ वदिति न्यायात् । अग्रशब्दानुत्तरवननककारस्य णत्वं न स्यादिति परार्थः । स च स्वीकरणीयः । अन्यथा चित्रवनादिषु अट्कुप्वाङित्यनेन प्राप्तस्य णत्वस्यानिवारणात् अट्कुप्वाङिति सूत्रप्राप्तं च णत्वं बाधितव्यमिति । किञ्च नियमपरत्वावश्यकत्वे चित्रकाननादीनामपि व्यावृत्त्यनुरोधेन निमित्तानधिकरणपदवृत्तेर्नस्य यदि णत्वम् । तर्हि अग्रोत्तरवननकारस्यैवेत्येवंविधनियम एव समाश्रयणीयः । तत्व्यावर्तकयत्नान्तरकरणे गौरवात् । इत्थं च नारायणशब्देपि यौगिके णत्वं दुर्घटम् । कृत्तध्दित समासाश्चेतिसूत्रे समासग्रहणस्य यत्र संघाते पूर्वो भागः पदं उत्तरस्तु प्रत्ययो न भवति तस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवेत्येवंविधनियमपरत्वांगीकारवत् अग्रग्रहणस्य दर्शितनियमपरत्वमपिहि युज्यत एव । अथास्य एवं विधनियमपरत्वे समानपदग्रहणवैय्यर्थ्यम् । तद्विरहेपि गीर्नमति रामनाम इत्यादिषु उक्तनियमेनैव णत्वव्यावृत्तेरिति चेत् हन्त नियमपरकत्वावश्यकत्वे चित्रकाननादीनां व्यावर्तनाय यत्नान्तरकरणे गौरवात् तदकरणकृतलाघवानुरोधेन इदृशनियमपरत्वमेव युक्तमिति वदतां समानपदाग्रहणकृतलाघवान्तरमपि उद्घाटयता सम्यक्दूषणमुक्तमायुष्मता । इदमत्र तत्वम् । यद्यपि समानपदाग्रहणेपि अग्रग्रहणस्य दर्शितनियमपरत्वेनैव सर्वनिर्वाहे तद्वैय्यर्थ्यं सर्वैरपि दुर्वारम् । तथापि समानपदग्रहणकृतकण्ठादिव्यापारगौरवादपि नियमविधिकृतमनोव्यापारगौरवमेव दुस्सहमित्यभिप्रायेण भगवता पाणिनिना समानपदग्रहणमेव कृतमिति सर्वसमाश्रयणीय समाधिः । तत्र यद्युत्तरपदत्वे चेत्यादिवार्तिकं णत्वविधावपि प्रत्ययलक्षणनिषेधकं भवेत् तदा उक्तनियमविधिगौरवं सोढव्यमेव स्यात् । ततश्च समानपदग्रहण-वैय्यर्थ्यं प्रागुक्तरीत्या दुर्वारमिति उक्तवार्तिकस्य णत्वविधावप्रवृत्तिरेव युक्ता । तथासतिहि अग्रग्रहणस्य विधिपरत्वसंभवात् न कोपि दोषः । किं च उक्तवार्तिकस्य णत्वविधौ प्रत्ययलक्षणनिषेधकत्वे पूर्वपदादिति सुत्रे अग इत्यस्य वैय्यर्थ्यम् । तध्दि ऋगयनादौ पूर्वपदादिति णत्ववारणार्थमिति भाष्यादावुक्तम् । पूर्वपदा-दित्यस्य परमते द्रुणसादिमात्रविषयकतया न ऋगयनादावनेन णत्वप्राप्तिः द्रुणसादौ पदादिविधित्वेन प्रत्ययलक्षणप्रवृत्त्यासामानपद्यासंभवेन तत्र णत्वप्राप्त्यर्थं पूर्वपदादिति सूत्रमिति तेनाङ्गीकारात् । न च ऋगयनादावट्कुप्वाङित्यनेन णत्वप्राप्त्या तन्निषेधकत्वमेव सार्थक्यान्यथानुपपत्या समाश्रीयते निमित्तनिमित्ति-नोर्मध्ये गकारेण व्यवधाने णत्वं नेति तदर्थ इत्यङ्गीकारादित्ति वाच्यम् । रागेणेत्यादौ णत्वासिध्दिप्रसंगात् । न च पूर्वपदस्थान्निमित्तात् परस्य नस्य णत्वं नस्यात् । गकारव्यवधाने इत्येवागइत्यस्यार्थ इति न दोष

इति वाच्यम् । तथा सति पूर्वपदस्थान्निमित्तात्परस्य नस्य णत्वन्न स्यादित्येतावत एव सम्यक्त्वेन गकारव्यवधानांशवैय्यर्थ्यात् नेत्युक्ते तावतैव पूर्वपदादित्येतत्संबन्धेन प्रागुक्तार्थवत् अस्याप्यर्थस्य लाभसंभवात् । नन्वेवं सति संज्ञाभूतनारायणादावपि णत्वानुपपत्तिः । ऋगयनादाविव तत्राप्यनेन निषेधात् । यदि चानेन निषेधेपि पूर्वपदात् संज्ञायामित्यनेन द्रुणसादाविव संज्ञाभूतनारारायणादावपि विधानान्नदोष इत्युच्यते तदा ऋगयनेपि णत्वं दुर्वारम् । वस्तुतस्त्वेवं सति पूर्वपदादित्यस्य प्रतिप्रसवत्वापत्त्या द्रुणसादौ णत्वानुपपत्तिरपि दोषः । तथा हि यद्यपि संज्ञाभूतनारायणादौ अट्कुप्वाङित्यनेनैव णत्व प्राप्तम् । उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन सामानपद्यसत्वात् । तथाप्युक्तनिषेधेनापोदितं पूर्वपदात्संज्ञायामित्यनेन पुनः प्राप्यते इत्यायातम् । इत्थं च द्रुणसादिषु पदादिविधितया प्रत्ययलक्षणसत्वेन सामानपद्यविरहात् णत्वस्यात्यन्ताप्राप्ततया न तत्प्रापकत्वमस्य संभवति प्रतिप्रसवत्वसंभवे अत्यन्ताप्राप्तप्रापकत्वायोगात् । अत एव तार्तीयाधिकरणे पूषा प्रपिष्टभाग इत्यस्य चरौप्राप्तापोदितपेषणपुनःप्रापकतया प्रतिप्रसवत्वसंभवात् । पुरोडाशे पशौ वा नापूर्वपेषणप्रापकत्वम् । चरौ हि प्रकृतितः चोदकवशात् प्राप्तं पेषणंद्वारलोपान्निवृत्तम् । तत्प्रापणे चापवादनिवृत्तिमात्रे विधेर्व्यापारात् लाघवं पुरोडाशे च पाकात्पूर्वं पेषणस्य प्राप्तत्वान्न विधानं संभवति । तदुत्तरं च पुरोडाशशब्दवाच्याकृतिविनाशापत्त्या न तत्संभवः । एवं पशुहृदयादावपि तेषामपि आकृतिविशेषविशिष्टमांसवाचित्वात् । यद्यपि अवदानोत्तरमुभयत्र पेषणविधानसंभवः । तथापि उक्तरीत्या प्रतिप्रसवत्वसंभवात् नात्यन्ताप्राप्तपेषणप्रापकत्वं विधिव्यापारगौरवादित्युक्तम् । तस्मादग इत्यनुक्तौ द्रुणसादौ णत्वानुपपत्तिरपि स्यात् । तदुक्तौतु नारायणादौ निषेधाप्रसरात् पूर्वपदादित्यस्य न प्रतिप्रसवसम्भवः । यद्यप्येवमपि ऋगयनादौ प्रतिप्रसवत्वसंभवः । निषेधस्यासंज्ञायां चारितार्थ्यात् । तथापि निषेधे संज्ञायामित्यस्यापि संबन्धाङ्गीकारात् न दोषः । तथा सति ऋगयनादौ णत्वनिषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वात् । तदेवमग इत्यस्य पूर्वपदस्थान्निमित्तात् परस्य गकारव्यवहितस्य नस्य णत्वं न स्यात् संज्ञायामित्यर्थः पर्यवसित इति न कोपि दोष इति चेदेवमपि सूत्रभेदाश्रयणं समर्थपरिभाषाबाधाश्रयणं चेति दूषणद्वयं दुर्निवारम् । उत्तरपदत्वेचेति वार्तिकस्य णत्वविधावप्रवृत्तौ हि ऋगयनादौ अट्कुप्वाङित्यनेन णत्वाप्राप्त्या अगइत्यस्य न भिन्नसूत्रत्वमाश्रयणीयम् । अग इत्यस्य पूर्वपदादित्येतद्विशेषणतया अगकारान्तात् पूर्वपदादित्यर्थाङ्गी कारात् । तत्सिध्दमपदादिविधिशब्दस्य पदान्तरत्र प्रयुक्तविधिपरत्वमङ्गीकृत्य णत्वविधावप्रवृत्तिवर्णनमेव युक्तमिति । किंच अपदादिविधिशब्दस्य उक्तार्थकत्वानभ्युपगमेपि पदादिविधिशब्दस्य लक्षणप्रतिपदोक्तपरि भाषया पदादिशब्दोच्चारणपूर्वकपदादिविधिपरताया आवश्यकत्वस्य वक्ष्यमाणतया द्रुणसादावपि अट्कुप्वाङित्यनेनैव णत्वसिध्या पूर्वपदादित्यस्य नियमपरताया एवावश्यकतया केवलयौगिके नारायणे णत्वं न संभवत्येव । पूर्वपदादित्यस्य भाष्यसंमतविधिपक्षविलयप्रसंगश्च । अत्र भाष्यादिग्रन्थविरोधाः भूयांस उपलभ्यन्ते । ते च स्पष्टतया ग्रन्थगौरवभिया च ते नेह लिख्यन्ते । वस्तुतस्तु निमित्तानधिकरणनिमित्तिमत्पदाघटितेत्यत्र पदशब्देन पदत्वयोग्यमेव विवक्षितम् । अन्यथागतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेरिति परिभाषया गन्धर्वगानादिषु सुबुत्पत्तेः प्राक् समासेन पदत्वघटितसामानपद्यसत्वेन णत्वप्रसङ्गात् क्षुभ्नादित्वाङ्गीकारे गौरवात् तदसंभवस्य

वक्ष्यमाणत्वाच्च । पदत्वयोग्यत्वं सुप्तिङ्विध्युद्देश्यतावच्छेदकधर्मवत्त्वम् । स च धर्मः प्रातिपदिकत्वं धातुत्वं च विभक्तीतरानपेक्षया लोके अर्थबोधकत्वेन यद् दृष्टं तत्वं पदत्वयोग्यत्वमिति तु न इन्द्रनिभादौ णत्वप्रसङ्गात् निभादेरुत्तरपदत्व एव साधुतया तथात्वासंभवात् । यत्तु नाराणामयनमिति तत्पुरुषसमासे णत्वमुपपद्यते सुबुत्पत्तेः प्रागेव समासेन पदत्वघटितसामानपद्योपपत्तेः गन्धर्वगानादिषु सुबुत्पत्त्यनन्तरमेव समासान्न दोषः । उक्तपरिभाषायाः अनित्यत्वादिति । तन्न । उक्तपरिभाषाया नित्यत्वमेव भाष्यकृदभिप्रेत-मित्यस्य स्थापितत्वात् भाष्यकृन्मत एव समानपदशब्दस्य निमित्तानधिकरणेत्याद्यखण्डपदपरत्वात् । यद्यपि वार्तिककृन्मते उक्तपरिभाषाया अनित्यत्वमेवेत्युक्तम् । तथापि न दोषः । समानपद इत्यस्य यथाश्रुतार्थक-तामङ्गीकृत्य पूर्वपदादित्यस्य नियमपरतायास्तेनाङ्गीकारात् । नियमश्च पूर्वपदस्थान्निमित्तात् परस्य उत्तरपदस्थस्य नस्य यदि णत्वं तर्हि संज्ञायामेवेत्येवंरूपः पूर्वपदशब्देन उत्तरपदस्याक्षेपात् तथाच सुबुत्तेः प्राक् समासेपि गन्धर्वगानादाविव तत्पुरुषनारायणशब्देपि णत्वं न संभवत्येव । अयनशब्दस्य समासचर-मावयवरूपोत्तरपदत्वानपायात् । न चैवंरीत्या नियमाभ्युपगमे होतृपोतृनेष्टोद्गातार इत्यत्र णत्वप्रसङ्गः । नकारस्य उत्तरपदस्थत्वाभावेन नियमेनाव्यावर्तनात् । अतो निमित्तानधिकरणपदवृत्तेर्नस्य यदि णत्वं तर्हि संज्ञायामेवेत्येवंविधनियमपरत्वमेव समाश्रयणीयमिति तत्पुरुषनारायणशब्दे णत्वोपपत्तिः सुबुत्पत्तेः प्राक् समासेनायनशब्दस्य पदत्वविरहेण नियमेनाव्यावर्तनात् । गन्धर्वगानादिषु सुबुत्पत्त्यनन्तरमेव समासाङ्गीकारात् न दोष इति वाच्यम् । उक्तरीत्या नियमाङ्गीकारे अग्रग्रामाभ्यामिति वार्तिकवैयर्थ्यप्रसंगात् । अग्रणीः ग्रामणीरित्यत्र सुबुत्पत्तेः प्रागेव समासेन दर्शितनियमेनाव्यावृत्त्या अट्कुप्वाङित्यनेनैव णत्वसिध्देः । अतः निमित्तानधिकरणपदत्वयोग्यवृत्तेर्नस्य यदि णत्वं तर्हि संज्ञायामेवेत्येवंविधनियमपरत्वमेवाश्रयणीयम् । तथा चाग्रणीर्ग्रामणीरित्यत्र दर्शितनियमेन णत्वव्यावृत्त्या अग्रग्रामाभ्यामिति वार्तिकचारितार्थ्यम् । तथा च तत्पुरुष-नारायणशब्देपि दर्शितनियमेन व्यावर्तनाण्णत्वं न संभवत्येव । किंच पदत्वघटितनियमाभ्युपगमेपि अबाधित-योगार्थे वस्त्वन्तरेपि नारायणशब्दस्य णत्वप्रसंगवारणायात्रापि सुबुत्पत्त्यनन्तरमेव समासस्याङ्गीकरणीयतया कथं णत्वोपपत्तिः । अपिच तत्पुरुषसमासे परवल्लिङ्गत्वप्रसंगेन पुल्लिङ्गतानुपपत्तिः भगवति तु निर्वच नमहिम्ना परवल्लिंगत्वबाध इति । तत्सिध्दं उत्तरपदत्वे चेति वार्तिकस्य णत्व विधौ प्रवृत्तावपि केवलयौगिके नारायणशब्दे णत्वं न संभवतीति यद्यप्येते न. उत्तरप्रपञ्चस्सर्वोपि निर्मूलितः । तथापि दूषणान्तरज्ञापनाय विशिष्य कतिपय विषया दूष्यन्ते । यदपि गन्धर्वगानादीनां क्षुभ्नादित्वाङ्गीकारेण वारणाभिधानम् तदपिविपरीतफलम् । तथा हि । तेषां क्षुभ्नादिगणेन प्रातिस्विकरूपेण पाठस्संभवति आनन्त्यात् लक्षणैक चक्षुष्काणां ग्र हत्वाच्च । किन्तु सर्वादिगणे डतरडतमेतिवत् मयूरव्यंसकादिगणे आख्यातमाख्या ने ति व च्चानुगतरूपेणैव तच्चासमानपदाते निमित्तानिमित्तिका संज्ञात्वादिरूपमेव । तथाच तस्य केवलयौगिकनारायण शब्दसाधारण्यात् कथं तत्र णत्व मिति यदपि अपदादिविधिशब्दस्य पदान्तविधिपरत्वाभिधानं तदप्ययुक्तम् तथासति परमगिरावित्यादौ र्वोरूपधाया इति दीर्घस्य परमबुधावित्यादौ एकाचो भश इति भष्भावस्य च प्रसङ्गात् तयोः पदान्तत्वविरहेण प्रत्ययलक्षणानिषेधात् अस्मदुक्तरीत्या पदान्तत्वप्रयुक्त विधिपरत्वे तु न

दोषः । तयोः पदान्तत्वप्रयुक्तत्वाक्षतेः । यदपि वार्तिका कारस्य पदान्तविध्यभिप्रायक त्वे पदान्तविधावित्यभिधानापादनं तदप्यनुपपन्नम् । पदान्तविध्यभिप्रायकत्वेपि तस्य पदान्तविधिशब्देनाभिधाने दोष सत्वेन तथानभिधानोपपत्तेः तथाहि—पदान्तविधावित्युक्तौ लक्षणप्रतिपदोक्तपरिभाषया पदान्तशब्दोच्चारणपूर्वकपदान्तविधेरेव ग्रहणं स्यात् । परिभाषोपरकृतवाक्यार्थस्यैव समाश्रयणीय त्वात् । यथा विभाषा दिक्समास इति विहिता सर्वनामसंज्ञा दिक्शब्दमुच्चार्यविहिते दिङ्नामान्तराळ इति समास एवेति योत्तरा सापूर्वा यस्या मुग्धायाः तस्यै उत्तरपूर्वायै इत्येवाङ्गीक्रियते तद्वत् । तथा च न लोपः प्रातिपदिकान्तस्येति विहितस्य न लोपस्य पदान्तशब्दोच्चारणपूर्वकपदान्तविधित्वविरहेण प्रत्ययलक्षणानिषेधे परमदण्डिनावित्यादौ नलोपापत्तिः । अपदादिविधिशब्देन पदान्तविध्य मिधाने तु नायं दोषः दर्शितनलोपस्य वस्तुतः पदान्तविधित्वात् । न च पदान्तशब्दोच्चारणपूर्वक विधित्वम् । पदशब्दसमभिव्याहृतत्वेनान्तपदानु सन्धानाधीन शब्दबोधविधेयत्वतात्पर्यविषयत्व रूपमवश्यमास्येयम् । अन्यथा चोः कुरित्यादेरप्यसङ्ग्रहप्रसङ्गात् । तत्र पदान्तशब्दोच्चारणविरहात् । इत्थं च नलोपस्यापि तथात्वसंभवान्नदोषः । न लोपः प्रातिपदिकान्तस्येत्यत्र प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः इत्यर्थवर्णनेन शाब्दबोधस्य पदशब्दसमभिव्या हृतत्वेनान्तपदानुसन्धानाधीनत्वाक्षतेः इति वाच्यम् । इहान्तपदस्य केवलादृष्टार्थतया शाब्दबाधोपधायकत्वविरहात् ।

तथाहि—इह नेति प्रातिपदिकेति च लुप्तषष्ठीकमिति निर्विवादम् । तत्र नेत्यस्यानुवर्तमानपदविशेषणतया येन विधिशास्त्रेण नान्तस्य प्रातिपदिकसंज्ञकस्य पदस्य लोप इत्यर्थे अलोऽन्त्यपरिभाषया समीहितसिद्धिरिति । अन्तग्रहणं पारायणादावदृष्टार्थमेवेति ।

किञ्च अन्तपदस्य शब्दबोधौपयिकत्वे ऽपि नपदशब्दसमभिव्याहृतत्वेन तदनुसन्धानं शाब्दबोधोपधायकम् स्वतास्सिद्धस्य प्रातिपदिकसमभिव्याहारस्य परित्यागे कारणविरहात् । अनुवर्तमानस्य पदस्य प्रातिपदिकविशेषणताया युक्तत्वात् ।

न च पदाङ्गाधिकारे तयोर्विशेष्यत्वं इतरस्यविशेषणत्वमिति नियमात् नेदं मुज्यत इति वाच्यम् । येन विधिशास्त्रप्रवृत्त्यर्हस्यैव इतरस्य विशेषणत्वनियमात् । अन्यत्र तथानियमे प्रयोजनविरहात् । इहप्रातिपदिके येनविधिशास्त्राप्रवृत्तेः सर्वसम्मततया तस्य विशेष्यत्वसंभवात् । तस्मा द्वार्तिककारस्य पदान्तविध्यभिप्रायकत्वेऽपि अपदादिविधावित्येवाभिधातव्यमिति सिद्धम् ।

यदपि एवकारस्य पदादिविधिमात्रव्यावर्तकत्वे ग्रन्थकाराभिप्रायवर्णनम् । तदप्यसंगतम् ।

तथाहि—माषकुम्भवापेनेत्यत्र कुम्भशब्दस्य उक्तवार्तिकेन प्रत्ययलक्षणनिषेधात् पदव्यवायेऽपीति निषेधानुपपत्तिरित्याशङ्का पदान्तविधावित्यभिधानेन प्रत्ययलक्षणनिषेधात् नानुपपत्तिरित्युक्तं कैश्चिदन्यकारैः । तत्र एवकारस्य पदादिविधिमात्रव्यावर्तकत्वदर्शितशङ्काया एवापरिहारात् असाङ्गत्यं स्पष्टमेवेति ।

यदपि चक्षुषैव रूपं गृह्यत इत्यत्र त्वगाद्यन्ययवच्छेदाभिधानं, तदप्ययुक्तम् । तत्र एवकारेण चक्षुरितर सकलेन्द्रियव्यवच्छेदात् चक्षुरितरेन्द्रियनिरूपितज्ञानत्वव्याप्यधर्मावच्छिन्नजन्यताश्रय ग्रहनिरूपितलौकिकविषयत्वाभावस्यैव रूपेप्रतीतेः चाक्षुषस्य ज्ञानत्वेन मनोजन्यत्वेऽपि रूपस्य मानसविषयत्वेऽपि च क्षतिविरहात् । कथमन्यथा चक्षुषैव रूपं गृह्यत इति वाक्याधीन निश्चयदशायां रसनेन रूपं गृह्यते नवेति संशयाद्यनुदयनियम उपपद्यते ।

यदपि अपदादि विधिशब्दस्य पदादिशब्दोच्चारण पूर्वकपदादिविधिभिन्नार्थकत्वासंभवप्रदर्शनं, तत्रापि व्याकरणानध्ययनमेवापराध्यति । लक्षणप्रतिपदोक्तपरिभाषया तादृशार्थस्यैवावश्यकत्वात् । कथमन्यथा यथाश्रुते परमबुधावित्यादौ भष्भाववारणम् । तत्र हि भष्भावस्य पदादिविधितया प्रत्ययलक्षण निषेधानुपपत्तिः । दर्शितार्थकत्वे तु तस्य पदादिशब्दोच्चारणपूर्वकत्वविरहान्नानुपपत्तिः ।

यदपि प्रश्नोपनिषदि श्रूयमाणयोः केवलयौगिकयोः समुद्रायणपुरुषायणशब्दयोः णत्वानुपपत्तिरिति । तदपिन । छन्दोमात्रगोचरयोः तयोः बाहुलकेनैवोपपत्तेः । लोकसाधारणसूत्रेण तदुपपादने लोकेऽपि तत्साधुताप्रसङ्गात् । लौकिकप्रयोगे तादृशस्य क्वाप्यनुपलम्भेन इष्टापत्त्यसंभवात् ।

नचैवं सति कारणवाक्यघटकनारायणशब्दस्य केवलयोगेन शिवपरत्वेऽपि बाहुलकत्वेन णत्वोपपत्त्या अस्मदिष्टसिद्धिरिति वाच्यम् । मुख्यार्थबोधसंभवे लक्षणाया इव तत्तदसाधारणशास्त्रेण उपपत्तिसंभवे बाहुलकत्वस्यापि हेयतायाः सर्वसंप्रतिपन्नत्वात् । अत एवाहीनो वाप्रकरणात् गौण इतितार्तीयाधिकरणे तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येत्यत्र अहीनशब्दस्य मध्योदात्तस्वरेण तत्पुरुषत्वाभावनिर्णयाभिधानं सङ्गच्छते । तत्रहि अस्य तत्पुरुषत्वे तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्या इति सूत्रेण प्रकृत्या पूर्वपदमित्यनुवृत्ति सहितेन अव्ययरूपस्य नञः पूर्वपदस्य उदात्तरूपप्रकृतिस्वरापत्या आद्युदात्तत्वं स्यात, मध्योदात्तश्चायं पठ्यते । अतः अह्नः खः क्रताविति विहितखप्रत्ययान्त एवायम् । तथासति अव्य नेयीत्यादिना ईनादेशे आयन्नादिषूपदेशिव द्वचनंस्वरसिद्धार्थमिति तस्योपदेशिवद्भावे च सति आद्युदात्तश्चेति प्रत्ययादेरीकारस्य उदात्तत्वेमध्योदात्तत्वोपपत्ते रित्युक्तम् । भवद्रीत्यातु तत्पुरुषत्वेऽपि बाहुलकत्वेन स्वरोपपत्या इदमयुक्तमेव स्यात् । एवं स्थूलपृषतीत्यादिषु स्वरविशेषेण समासविशेषनिर्णयो दत्तजलाञ्जलिस्यात् । किंबहुना कारणवाक्यघटकनारायणशब्दस्य शिवपरत्व सिद्धावेव बाहुलकेन तस्य शिवे साधुत्वसिद्धिः । शिवे साधुत्वसिद्धावेव शिवपरत्वसिद्धिरित्यन्योन्याश्रयणम् । तथाहि—तत्तदसाधारण शास्त्रेणा नि र्वाह एव बाहुलकप्रवृत्तिरित्यविवादम् । ततश्च प्रकृते पूर्वपदादितिशास्त्रेण अनिर्वाहनिर्णये सति एवं बाहुलकेन साधुत्वनिर्णयः पूर्वपदादिति सूत्रेणानिर्वाह निर्णयश्च शिवपरत्वनिर्णयाधीनः अतः बाहुलकेन शिवे साधुत्वनिर्णयः पूर्वपदादिति शास्त्राप्रवृत्ति निर्णयद्वारा शिवपरत्वनिर्णयाधीन इतिसिद्धम् । शिवपरत्वनिर्णयश्च शिवे साधुत्वनिर्णयाधीनः,

शिवे साधुत्वविरहे तत्परत्वायोगात् । समुद्रायणादौ रूढ्यर्थाप्रसिद्ध्या पूर्वपदादित्यनेना निर्वाहनिर्णये बाहुलक-प्रवृत्तिनिर्णय इति भेदः ।

यदपि व्युत्पत्यन्तरप्रदर्शनं, तदपि प्रकृतानुपयुक्तम् कारणवाक्यघटकनारायणशब्दे तदसंभवस्य प्रागुक्तत्वात् । तदेवं कारणवाक्यघटकनारायणशब्दस्य शिवपरत्वासंभवात प्रागुक्तरीत्याभगवत्परत्वसिद्या भगवत एव जगत्कारणत्वसिद्धिः सर्वाधिकत्वसिद्धिः । सर्वमिदमभिप्रेत्यानुगृहीतमाचार्य चरणैः—"निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे सद्ब्रह्मद्यास्समान प्रकरणपठिताश्शङ्कि तान्यार्थशब्दा – इति। इत्थं च शिवोत्कर्षपरपुराणादीनां शारीरक स्मृत्यधिकरणनिश्चलीकृतविरोधाधिकरणन्यायेन, अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् इति मात्स्यपुराणवचनेनचा प्रामाण्यमेवेति सर्वं समञ्जसम् ॥

श्रीकृष्णतातदासं द्वारीकृत्येह देशिकैः कलिता ।
भूयाद्भागवतानां प्रीत्यै परमुख चपेटिका सेयम् ॥

इति श्रीशैलकुलतिलक श्रीमहामहोपाध्याय श्रीकृष्णताततदासस्य
कृतिषु परमुखचपेटिका संपूर्णा ॥

श्रीमते रघुनन्दन परब्रह्मणे नमः ॥

श्रीःमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ॥

श्रीमते निगमान्त महागुरवे नमः ॥

॥ श्रीः ॥



Sri Venkateswara Press, Kanchipuram-3.

श्रीः

# श्री णत्वचन्द्रिका

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः

श्रीमते रगुनन्दनपरब्रह्मणे नमः

**रघुवंशदुग्धजलधौ जातंसन्तानमाश्रयेकमपि ।**
**अतितुङ्गादपि यस्मात् विनतैरग्रयंफलंकरग्राह्यम् ॥**
**वकुळभूषणपादसरोरुह प्रवणमानससंयमिशेरवरम् ।**
**कलयतो निगमान्तगुरोः पदेकृतधियेकरवै गुरवे नमः ॥**
**लक्ष्मीकुमारतातार्यवंश्यवेङ्कटसद्गुरोः ।**
**तनयःकृष्णतातार्यः तनुते णत्वचन्द्रिकाम् ॥**
**णत्वे परोक्तयुक्तीनांदूषणं सम्यगीरितम् ।**
**तुष्टये वावदूकानां कक्ष्याषष्टिं प्रदर्शये ॥**

इह खलु कारणवाक्यगतानां सद्ब्रह्मादि सामान्यशब्दानां छागपशुन्यायेन समानप्रकरण पठित नारायणशब्द समर्पिते भगवति विशेषे पर्यवसानं. ततश्च कारणवाक्यगत शिवादि शब्दानामपि यथायथं रूढयायोगेनवा भगवत्परत्वमेव. कारणद्वित्वासंभवात्. तथाच सर्वश्रुत्यैककण्ठयेन भगवत एव जगत्-कारणत्वसिध्या सर्वाधिकत्व सिद्धिरिति औपनिषदानां निर्णयः. तत्र तादृश सद्ब्रह्मात्मादि साधारण-शब्दानां उक्तन्यायेनैव तादृश शिवशब्दसमर्पिते शिव एव विशेषे पर्यवसानमस्तु. तादृशनारायणशब्द-स्यापि—शिवपरत्व संभवेन कारणद्वित्वाप्रसक्तेः इत्याशंकानिराकरणाय कारणवाक्यगत नारायणशब्दस्य शिवपरत्वासंभवस्तावत् उपपादनीयः तत्प्रकारश्चेत्थं. कारणवाक्यघटक नारायणशब्दस्य शिवपरत्वं किं रूढ्या? आहोस्वित् केवलयोगेन अथवा लक्षणया. नाद्यः भगवतोन्यत्र रूढ्यभावस्य स्थापयिष्य-माणत्वात्. नान्त्यः. मुख्यार्थबाधविरहेण निषादस्थपत्यधिकरण न्यायेन लक्षणायाः अन्याय्यत्वात्. औपनिषदमते शिवादि शब्दानां भगवत्परत्वंतु न लक्षणया. किन्तु शुभत्वसामान्य रूढ्यादिनैवेति विशेषः. द्वितीये च नारं अयनं यस्येत्यादिकया उपबृंहण दर्शितव्युत्पत्या वा कुदृष्टिकल्पित व्युत्पत्यन्तरेण वा नान्त्य.. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्. बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यतीति. शास्त्र विरोधात् नाद्यः. तादृशव्युत्पत्या नारायणशब्दस्य शिवपरत्वे णत्वानुपपत्या साधुत्वासंभवात्. तादृश व्युत्पत्यधीन यदर्थबोधेच्छया उच्चरितस्य यस्य शब्दस्य साधुत्वविरहः. तादृशव्युत्पत्यधीन तदर्थ बोधौपयिकं ईश्वरतातपर्यम् तत्र शब्देनेति हि नियमः सर्वसंप्रतिपन्नः.

तथाच नारं अयनं यस्येत्यादिव्युत्पत्यधीन शिवबोधेच्छया उच्चरितस्य नारायणशब्दस्य साधुत्व विरहात् तादृशव्युत्पत्यधीन शिव बोधौपयिकमीश्वरतात्पर्यम्' न नारायणशब्दे संभवतीति. कारण वाक्यघटक नारायणशब्दात् न शिवबोधसंभवः वैदिकवाक्यार्थबोधे ईश्वरतात्पर्यस्यैव प्रयोजकत्वात्. तथाच नारं अयनं यस्येत्यादि व्युत्पत्यधीन शिवबोधेच्छया उच्चरितस्य नारायणशब्दस्य साधुत्वा भाव सिद्धावेव समीहित सिद्धिधरिति पर्यवसानात्. तादृशशब्दस्य साधुत्वा भाव एव इह साधनीयः तत्रेयं विप्रतिपत्तिः. नारं अयनं यस्येत्यादि व्युत्पत्यधीन शिवबोधेच्छया उच्चरितो नारायणशब्दः साधुर्नवेति. तत्र विधिकोटिः शैवानां. निषेधकोटिः औपनिषदानां. अत्र उच्चरितां तस्य पक्षविशेषणस्य अनुपादाने सामानाधिकरण्येन साध्यसिद्धेरुद्धश्यतायां भगवत्पर नारायणशब्दे अंशतस्सिद्ध साधनात् निषेधकोटेश्च अंशतो बाधः अवच्छेदकावच्छेदेन तथात्वे घटादिबोधेच्छया उच्चरिते नारायणशब्दे अंशतो बाधः. निषेध कोटेश्च तत्रैव सिद्धसाधनम्. अतः तदुपादानम् लक्षणया कुदृष्टि कल्पित व्युत्पत्यन्तरेण वा शिवपरस्य नारायणशब्दस्य कथञ्चित् साधुत्व संभवात्. सिद्धसाधनादिवारणायाधीनान्तं बोधविशेषणम्. साधुत्वं च गाव्यादिश्यावृत्तः गवादिशब्दनिष्ठः साधूनेव प्रयुञ्जीत. नासाधूनिति नियमनिर्वाहकः एकशब्दः सम्यक् ज्ञातः सुष्टुप्रयुक्तः. स्वर्गेलोकेकामधुग्भवतीति श्रुतौपुण्यविशेषजनकतावच्छेदकतया. उपात्तो व्याकरणैक समधिगम्यो धर्मविशेषः. स च जातिरखण्डोपाधिः. कार्यविशेषानुकूलशक्ति विशेषोवा यथामतमनुसन्धेयः. अत्र शैवाः उक्तनारायणशब्दः साधुः. व्याकरणाविहित कार्याघटितत्वे सति किञ्चिद्विधेयुद्धश्यतावच्छेधक धर्मानाक्रान्तशब्दत्वात्, संप्रतिपन्नसाधुशब्दवत् अत्र सुबन्तस्यैव नारायण शब्दस्य पक्षतया सुब्विधेयुदेश्यतावच्छेतक प्रातिपदिकमादाय न स्वरूपा सिद्धिः.

केवलयोगार्थारे युधिष्ठिर इत्यादौ व्यभिचार वारणाय सत्यन्तनिवेशः. तथासति षत्वस्य व्याकरणाविहितत्वात् नदोषः. केवलप्रातिपदिके व्यभिचारवारणाय विशेष्यं. नच केवलयौगिके दर्शितनारायणब्दे णत्वस्य व्याकरणाविहिततया सत्यन्तविरहात् स्वरूपासिद्धिरिति वाच्यं. अट्कुप्वा ङ्नित्यनेन तत्रापि णत्व विधानात् समासात् सूत्पत्या समुदायस्यापि पदत्वेन समानपद इति सप्तम्यन्त लभ्यस्य निमित्ताधिकरण पदवृत्तित्वस्याप्यक्षतेः नच नरसंबन्ध्यधिकरणकत्वं शिवे बाधितमिति शंक्यम्. नरसंबन्धित्वेन रूपेण शिवाधिकरण भूतस्य शिवलोकादेः ग्रहणसंभवात्. नरसंवन्धित्वेन जलमेव उपादेयमिति निर्बन्धे माना भावात्. जलाधिकरणकत्वस्यापि शिवे संभवाच्चेति वदन्ति. ॥ १ ॥

औपनिषदास्तु उक्तनारायणशब्दे अट्कुप्वाङ्नित्यनेन णत्वविधानासंभवात्, प्रकारान्तरेण णत्वा प्रसक्तेश्च स्वरूपासिद्धिः. तथाहि यदि समानपद इत्यनेन निमित्ताधिकरण पदवृत्तित्वरूपमेकपदस्थत्वमुच्यते तथा समानग्रहण वैयर्थ्यापत्तिः. पद इत्येकवचन विवक्षयैव एकपदस्थत्वलाभात. अन्यत्र सूत्रे वचनस्य अविवक्षितत्वेपि अपदस्थयोः निमित्तनिमित्तिनोः असंभवेन इह पदइत्यनेन तद्विवक्षाज्ञापनात् किञ्च रामनामादिषु णत्वप्रसङ्गः. तत्रापि समासात् सूत्पत्या निमित्ताधिकरणपदवृत्तित्वसत्वात्. अतः अत्र समानमेव यत्पदमिति

अवधारणाश्रयणात् सप्तम्यन्तेन निमित्तानधिकरण निमित्तिमत्पदाधटित वृत्तित्वमेव अभिधीयते. ततश्च. रामनामादिषु नामशब्दस्य प्रत्ययलक्षणेन पदत्वात्. निमित्तानधिकरण निमित्तिमन्नामपदधटिततया न दोषः. यथा समानमेवेत्यवधारणाश्रयणमात्रेण समानपदशब्दात् निमित्तानधिकरण निमित्तिमत्पदा धटितत्वलाभः. तथा उपपादितमस्मदीयपरमुखचपेटिकायां. वस्तुतस्तु समान एव पदे न तु भिन्न इति रीत्या अभिन्नपदस्थत्वाभावः. निमित्तानधिकरण निमित्तिमत्पदावृत्तित्वरूपः सप्तम्यन्तलभ्य इति न समा नग्रहणवैयर्थ्यम् नवा रामनामादिषु णत्वापत्तिः नकारस्य निमितानधिकरण नामपदवृत्तित्वात्. सर्वथा प्रकृते अयनपदस्य निमित्तिमतः निमित्तानधिकरणतया अट्कुप्वाङित्यनेन णत्वं दुरुपपादमेवेति. तथा च दर्शित नारायण शब्दः नसाधुः व्याकरणाविहित कार्य धटितत्वात् केवलयोगेन अन्यपर युधिष्टिरादिवत् इत्यनुमानेनासादुत्व सिद्धिः व्याप्य व्यापक भावस्य निर्विवादतया नाप्रयोजकत्व शंकावकाश इत्याचक्षते ॥ २ ॥

नच उत्तर पदत्वेचेति वार्तिकेन अयन शब्दस्य प्रत्यय लक्षण निषेधात्. उक्त सामान पद्योपपत्या णत्वोपपतिः. तथाहि तत्र उत्तर पद शब्दः समास चरमावयवपरः तस्य तत्र रूढत्वात्. सत्सप्तम्याच सामानाधिकरण्य रूपं वैशिष्टयम् बोध्यते. गुणकर्मान्यत्वेसति सत्वादित्यादौ तथा दर्शनात्. तच्च सामानाधिकरण्यम् इह आश्रयत्व उद्देश्यत्व उभयधटितमिति उत्तर पदत्वाश्रय वर्णोद्देश्यको योयमपदादि विधिः तस्मिन् कर्तव्ये प्रत्पय लक्षणम् नेति वार्तिकार्थः उत्तरपदत्वस्य समुदाय पर्याप्त त्वेपि तत् धटकवर्णानाम् आश्रय तया तदधिकरणत्वम् अक्षतम्' ततश्च प्रकृते अयन पद धटक नकारोंद्देश्यक णत्व विधेस्तादृश तया प्रत्यय लक्षण बिरहेण णत्वोपपत्तिः राम नामादिषु णत्व विधेः पदादि विधि तया प्रत्यय लक्षण सत्वात् नदोंषः गन्धर्वगानादौ णत्वापत्तिस्तु क्षुभ्नादित्वांगीकारेण वारणीयः तस्य आकृतिगणत्वादिति इत्थञ्च औपनिषदोक्त हेतोः स्वरूपासिद्धिः अस्मदुक्त हेतोंश्च पक्षे सत्वम् इति वाच्यम् ॥ ३ ॥.

उक्त वार्तिकेन णत्वविधौ प्रत्यय लक्षणा निषेधेन दर्शितरित्या णत्वोपपादना संभवात्. तथाहि. तर्शितरीत्य वार्तिकार्थ स्वीकारे परमवाक् परम लिडित्यादौ कुत्व डत्वाद्यनुपपत्तिः तद्विधेरूत्तर पदत्वाश्रय वर्णोद्देश्यकत्वानपायेन तस्मिन् कर्तव्ये समस्त समुदायस्यापि प्रत्यय लक्षण निषेधापत्तेरत इत्थं वार्तिकार्थो वर्णनीयः उत्तरस्यपदत्वं उत्तरपदत्वं तस्मिन्सति योयमपदादिविधिरिति. तत्र उत्तर शब्द उत्तर पद परः सत्सप्तम्या प्रयुक्तत्वं बोध्यते. पयःपानेसति पिपासा शाम्यतीत्यादौ तथा दर्शनात्. तथाच उत्तर पद निष्ठपद त्व प्रयुक्तते अपदादि विधावेव प्रत्यय लक्षण निषेधात् नपरमवाक् परमलिडित्यादौ कुत्व डत्वाद्यनुप पत्तिः समुदाय गत पदत्वम् आश्रित्यैव तत्र तत् प्रवृत्या तत्र प्रत्यय लक्षणानिषेधात् इत्थंच णत्व प्रवृत्तिस्थले उत्तर पदस्य पदत्वे सामान पद्य विघटनेन णत्वसौवासंभवप्रसंगेन तद्विधेरूत्तर पद निष्टदत्व प्रयुक्तत्वा संभवात् न तत्रोक्त वार्तिकप्रवृत्तिरिति ॥ ४ ॥

नच णत्वविधेरपि उत्तरपदनिष्ठ पदत्व प्रयुक्तत्वं संपद्यते. तथाहि अत्र उत्तरपदनिष्ठ पदत्व प्रयुक्तत्वन्नाम नतावत् तादृश पदत्व जन्यत्वादि रूपम् असंभवात्. अत एव नतत्व्यापकत्व रूपम् नापि तत्व्याप्यत्व रूपम्. वाग्वक्तीत्यादौ व्यभिचारात् किन्तु तत्घटित धर्मावच्चिन्न उद्देश्यताक विधि विषेयत्वमेवतत्. तादृश एव बैयाकरणानाम् प्रयुक्तत्व व्यवहारात्. अन्यस्य दुर्वचत्वाच्च, भवतिच कुत्वादि विध्युद्देश्यतावच्चेदक कोटौ पदत्वस्य. घटकतया तेषान्तत्प्रयुक्तत्वोपपत्तिः तथाच णत्व विध्युद्देश्यतावच्चेदक कोठौ निमित्तानधिकरण निमित्तिमन्निष्ठम् पदत्वम् घटकमित्यविवादम्. तच्च रामनामाद्यन्तर्गतोत्तर पदनिष्ठम् पदत्वमेवेति णत्वविधेरुक्तविधतत्प्रयुक्तत्व संपत्या तत्र वार्तिक प्रवृत्तिः निर्बाधैवेतिवाच्यम् ॥ ५ ॥

तत् घटित धर्मा वच्चिन्नोद्देश्यताक विधि विषयत्वमात्रस्य तत् प्रयुक्तत्व रूपताविरहेण णत्वविधौ वार्त्तिक प्रवृत्यसंभवात् तथाहि यद्यपि लोके कारणतावच्चेदक घटकइव व्याकरणे उद्देश्यता-बच्चेदक घटके प्रयोजकत्व व्यवहारोस्ति. तथापि मणित्वादौ दाहादि कारणतावच्चेदक घटकत्वेपि अभाव प्रतियोगि कोटिनिविष्टतयैव तत् घटकतया यथा लोकेनप्रयोजकत्व व्यवहारःतथा व्याकरणेपि पदत्वस्य णत्व विध्युद्देश्यतावच्चेदक घटकत्वेपि अभाव प्रतियोगिकोटिनिविष्टतयैव तत्—घटक तया नतत्र प्रयोजकत्व व्यवहारः तथाच प्रकृते तत् घटितधर्मावच्चिन्न प्रतियोगिताकाभावघटितोयः तत्घटितोधर्मः तदवच्चिन्न उद्देश्यताक विधिविषयत्वमेव तत्प्रयुक्तत्वमिति णत्वविधेः पदत्व प्रयुक्तत्वं दुर्लभमेवेति किञ्च सत् सप्तम्या सामानाधिकरण्यसहितमेव प्रयुक्तत्वं बोध्यते. पयः पानेसति पिपासाशाम्यतीत्यादिषु तथानुभवात् तथाच उत्तरपदनिष्ट पदत्व प्रयुक्तः तत् समानाधिकरणश्च योयमपदादिविधिः तत्रैव उक्त वार्तिकेन प्रत्यय लक्षण निषेध इति णत्व विधौ तदप्रवृत्तिरेवेति ॥ ६ ॥

नचोक्तरीत्या वार्तिकाथ वर्णनं नैव युज्यते तादृशापदादि विधेरेवाप्रसिद्धेः उत्तर पदनिष्ट पदत्वमाश्रित्य कुत्वादेः क्वाप्यप्रवृत्तेः यत्तु तादृश पदत्व प्रयुक्तत्व संभावनाविषयत्वमेव बिवक्षितम्. संभावनाच. परमवाचा परमलिडित्यादौ यत् उत्तर पदस्य पदत्वं स्यात्तदातत्प्रयुक्तं कुत्वडत्वादिकं भवेदि त्येवं विधज्ञान विशेषरूपा. साच पाणिन्यादि मुनिसमवेतैव ग्राह्या तेननाति प्रसङ्गः तथाच तादृशस्य कुत्व डत्वादेः प्रसिध्यानदोष इति तन्न उक्तार्थस्य दर्शित वार्तिकेनालाभात्. सत्सप्तम्याः प्रयुक्तत्व संभा वना विषयत्व बोध कतायाः क्वाप्य दर्शनात्. अतः उत्तरस्य उत्तर पदस्य पदत्वे पदसंज्ञायां. यत प्रत्यय लक्षणमित्यन्वयेनापदादिविधौ कर्तव्ये उत्तरपदस्य पदसंज्ञासंपादकं प्रत्यय लक्षणन्नेत्येवं वार्ति कार्थोवर्णनीयः बैयाकरण ग्रन्थेष्वपि इत्थमेव तत् वर्णनम् दृश्यते. तथाच णत्व विधौ वर्तिक प्रवृत्तिर्नि र्बाधैवेति वाच्यं ॥ ७ ॥

अपदादि विधि शब्दस्य पदान्त विधि परतया णत्व विधौ वार्तिक प्रवृत्यसंभवात्. तथाहि. अपदादि विधावित्यत्रनञोनभिन्नमात्रमर्थः अपितु भिन्नसदृशं नञिव युक्तमन्य सदृशाधिकरणे तथाह्यर्थ गतिरिति

न्याय्यात्, सादृश्यञ्च, स्वघटित पद घटक वर्णनिरूपित पूर्वकत्व तादृशवर्णनिरूपितोत्तरत्व उभयवत् भिन्नोद्देश्यक विधित्वेन तथाच उक्त रूपेण पदादि विधि सदृशः पदान्त विधिरेव इह अपदादि विधि शब्दार्थः यत्तु. अकर्तरिच-कारके संज्ञायां इत्यत्र कारक ग्रहणेनोक्त परिभाषाया अनित्यत्व ज्ञापनात् नेहतत् प्रवृत्तिः अङ्गीक्रियत इति तन्न. इह तदप्रवृत्तौ गमकादर्शनात्. परिभाषाणां लक्षण संस्कारार्थमेव क्लृप्ततया गमकमन्तरेणा प्रवृत्यङ्गीकारायोगात् ॥ ८ ॥

नच परिभाषेन्दुशेखर व्याख्यातृभिः संज्ञाशास्त्रातिरिक्तत्वेसति लक्ष्य संस्कारक सूत्रशेषत्वं परिभाषात्वं इत्यङ्गीकृत्य अतिदेशस्यापि परिभाषात्व स्वीकरात् प्रत्यय लक्ष्ण शास्त्रस्य परिभाषा रूपतया तदपवादैक वाक्यस्योक्त वार्तिकस्यापि परिभाषात्वमेव. ततश्च नञिव युक्तपरिभाषाया नतत्र प्रवृत्ति संभवः गुणानाञ्च परार्थत्वादिति न्यायेन परिभाषयोः परस्पर शेषशेषि भावा संभावात्. उभयोरपि लक्ष्य संस्कार सूत्र शेषत्वा विशेषात्. यथा आधान पवमानेष्टयोः न परस्पर शेष शेषि भाव संभवः तद्वत् तत्रहि अग्नीनादधीतेत्ति वचनेनाधानस्येव तत् प्रकरणस्थेन यदाहवनीयेजुह्वोत्तीति वाक्येन होमेना हवनीयं भावयेदित्यर्थकेन पवमानेष्टेरपि अग्नियंगत्वमेवेति स्पष्टम्. शाबरभाष्य इति वाच्यम् ॥ ९ ॥

प्रकृते दर्शितन्यायानवतारात् एकं प्रत्यंगत्वेनावगतयोः तत एव प्रयोजनाकांक्षा शान्तेर्विनि गमना विरहाच्च न परस्परांगांगि भाव इतिहि दर्शितन्याय शरीरं. ततश्च यत्र प्रधानांगताग्राहकमेव प्रमाणं प्रधानांगतया सहैवांगांगत्वं मपि ग्राहयति. नतत्रायंन्यायः प्रवर्तते. अंगांगता ग्रहणात् प्राक् प्रथानांगत्वस्याप्यग्रहणेन नैराकांक्ष्य विरहात्. तादृश प्रमाणस्यैव विनिगमकत्वाच्च. अतएवाहवनीये जुहोतीत्यनारभ्याधीत वाक्येन प्रधाना प्रधान सकल होमांगतया आहवनीय विधानमित्युपपद्यते. अतएव च कर्तृ कालादेः प्रधाना प्रधान सकल कर्मांगत्वं इति सिध्धान्तित मेकादशे. तथाच प्रकृते नञिवयुक्त परिभाषायाः सामर्थ्य रूपात् लिङ्गात् लक्ष्य संस्कारक सुत्र शेष तया सहैव परिभाषा शेषत्वस्यापि ग्रहणात् नतत्र गुणानाञ्चेति न्याय प्रवृत्तिः एवं प्रथाना प्रधान सर्व शेषत्व ग्राहक लिंगशालि परिभाषान्तराणां संज्ञा शास्त्राणांच दर्शित न्याया विषयत्वमेव. अत एवांगसंज्ञा सूत्रे तस्मिन् इति परिभाषा प्रवृत्ति रुपपद्यते. एतदेव अभिप्रेत्य गुणः कृतात्म संस्कार इत्यादि उक्तं वैयाकरणैः ॥ १० ॥

नच अपदादि विधि शब्दस्य पदान्त विधि परत्वं यद्यभिप्रेयात् तर्हि पदान्त बिधा वित्येवा भिदध्यात्. अत इत्थमेवाभिदधानस्य पदमध्य विधि संग्रहेप्याशयोस्तीत्युन्नीयते. ततश्चानेनैव गमकेन इह नञिव युक्त न्यायो नप्रवर्तत इति णत्व विधावपि वार्तिक प्रवृत्तिरव्याहतैवेति वाच्यम् ॥ ११ ॥

यतः पदान्त विधा वित्युक्तौ लक्षण प्रति पदोक्त परिभाषया पदान्त शब्दोच्चारण पूर्वक पदान्त विधेरेव ग्रहणंस्यात्. ततश्च परमदण्डिनेत्यादौ नलोपा पत्तिः नलोपः प्रातिपदिकान्तस्येति

विहितस्य तस्य पदान्त शब्दोच्चारण पुर्वकत्व विरहेण तत्र प्रत्यय लक्षणानिषेधात्. अपदादि विधा वित्युक्तौ वस्तुगत्या यः पदान्तविधिः तस्यैव ग्रहणेन नलोपस्यापि तादृशत्वानपायेन तत्रापि प्रत्यय लक्षण निषेधात् नानुपपत्तिः तथाच अपदादिविधा वित्यभिधानस्य उक्ताशयोन्नायकत्वा संभवेन इङ् नञिव युक्त न्यायां प्रवृत्ति गमकं दुर्लभमेवेति ॥ १२ ॥

नच पदान्त शब्दोच्चारण पूर्वकत्व लाभेपि नदोषः. तथाहि पदान्त शब्दोच्चारण पूर्वकत्वंहि पद शब्द समभिव्याहृतत्वेन अन्तपदानुसंधानाधीन शाब्दबोध विधेयत्व तात्पर्यविषयत्व रूपमवश्यं निर्वाच्यम्. अन्यथा चोः कुरित्यादावपि सूत्रे पदान्त शब्दानुच्चारणेन कुत्वादेरप्य संग्रह प्रसंगात. इत्थंच नलोपः प्राति पदिकान्तस्येत्यस्य प्रातिपदिक संज्ञकं यत् पदं तदन्तस्य नस्य लोप इत्यर्थात्. पदशब्द समभिव्याहृतत्वेन अन्त पदानुसंधाना धीनत्वं शाब्दबोधे निर्बाधमिति. नपरम दण्डिनेत्यादौ नलोप प्रसंगः तत्र उक्त वार्तिक प्रवृत्या दण्डिन्नित्यस्य पदत्व विरहात् इति वाच्यम् ॥ १३ ॥

पदान्त शब्दोच्चारण पूर्वकत्वस्य उक्त रूपत्वेपि नलोपस्य तधात्वासंभवेन वार्तिका प्रवृत्या दर्शित दाषा निस्तारात्. तथाहि. अत्र नेति. प्रातिपदिकेतिच. लुप्तषष्ठीकं इति निर्विवादम् ततश्च नेत्यस्य प्रतिपदिक विशेषणत्वं अंगीकृत्य नान्तस्य प्रातिपदिकसंज्ञकस्य पदस्य लोप इत्यर्थांगीकारे. अलोन्त्य परिभाषया समीहित सिध्या, अंत ग्रहणं पारायणादावदृष्ठार्थमेव नतु तस्य शाब्दबोधौपयिकत्वे भगवतः पाणिनेः तात्पर्यमिति. तथाच न प्रागुक्ताशयोन्नयनंयुज्यत इति अपदादि विधिशब्दस्य पदान्त विधि परत्वम् आवश्यकमेव ॥ १४ ॥

नच अन्तग्रहणस्य शाब्दबोधौपयिकत्व तात्पर्यस्यापि संभवात्. तस्य केवलादृष्टार्थत्वं नयुज्यते. तथाहि एकः शब्दः सम्यक्ज्ञातः सुष्टुप्रयुक्तः स्वर्गेलोकेकामधुग्भवति इति श्रुत्या शास्त्राधीन प्रक्रिया ज्ञान पूर्वक सुशब्द प्रयोगस्यैव धर्मोत्पत्ति हेतुत्वं बोध्यत इत्य विवादम्. यस्य सूत्रस्य सूत्रावयव-स्यवा प्रक्रियांशे प्रयोजन विशेषानुपलब्धिः. तस्याप्यभ्युदय शिरस्क प्रक्रिया ज्ञानसंपादकतया संभवत्येव चारितार्थ्यम्. तादृश सूत्रेण ज्ञात्वैव सु शब्द प्रयोगे धर्मोत्पत्तिरिति व्यवस्थांगीकारात् यधा सर्वेभ्यो दर्श पूर्णमासा वित्यनेन दर्श पूर्णमासयोः स्वर्गफलकत्वस्यापिसिध्या दर्शपूर्णमासाभ्यां स्वर्गकामोयजेतेति वाक्यवैयर्थ्ये प्राप्ते सार्वकाम्य वाक्यस्य स्वर्गातिरिक्त फल समर्पकत्वं स्वर्गकाम वाक्यस्यच स्वर्ग समर्प-कत्वं. सार्वकाम्य वाक्यादेव कृत्स्न फलसमर्पण संभवेपि. इत्थंज्ञात्वानुष्ठान फलसिध्धिरिति अंगीकारात् न स्वर्गकाम वाक्य वैयर्थ्यमिति अभ्युदय शिरस्क प्राप्तिफलकत्वं तद्वाक्याम्नान बलात् अंगीक्रियते, यथाच. सप्तदशसामिधेनीरनुब्रुयात् इत्यनारभ्याधीतस्य प्राकरणीक पाञ्चदश्यावरोधेन प्रकृतौ निवेशमलभमानस्य अतिदेश प्राप्त पाञ्चदश्याबाधाय मित्रविन्दादि प्रकरणस्थेन सप्तदशसामिधेनीरनुब्रुयात् इति वाक्यान्तरेणावगत सामिधेनीसंबंधासु तास्वेव विकृतिषु निविष्टस्य प्राकरणिक वाक्यमादाय वैयर्थ्ये प्राप्ते प्राकरणिक वाक्यस्य

साप्तदश्ये क्रतुसंबंधप्रापकत्वं अनारभ्याधीतस्यतु तत्र सामिधेनीसंबंधप्रापकत्वं प्राकरणिक वाक्येनैव. उभय प्राप्तिसंभवेपि इथ्तंज्ञात्वनुष्ठानएव फलसिध्धिरिप्ति अंगीकारात् न अनारभ्याधीत वैयर्थ्यमित्युपपाद्यते तद्वत्. तथाच अन्तपदघटित सूत्रैणैव प्रक्रियाज्ञानस्य संपादनीयतया तस्य शाब्दबोधौपयिकत्व तात्पर्यमस्त्येवेति प्रागुक्तरीत्या अपदादिविधि शब्दस्य पदान्त विधिपरत्वन्नसंभवत्येवेति वाच्यं ॥ १५ ॥

उक्तरीत्या अन्त पदस्य शाब्दबोधोपयिकत्व संभवेपि पदशब्द समभिव्याहृतत्वेन तदनुसंधानस्य तथात्व विरहेण तद्दैषतादवस्थ्यात्. तथाहि प्रातिपदिकेत्यस्य अन्तपदार्थेनैवान्वयोयुक्तः सान्निध्यात् प्रातिपदिकेत्यस्य पद विशेषणत्वं पदस्येत्यस्य अन्तपदार्थ विशेषणत्वं इस्यस्य अतिक्लिष्टत्वात्. अत अनुवर्तमान पदशब्दार्थस्य प्रातिपदिक विशेषणत्वं अङ्गीकृत्य पदाभिन्न प्रातिपदिकान्तस्य तस्य लोप इत्येव बोधो वर्णनीयः तथाच पदशब्द समाभिव्याहृतत्वेनान्तपदानुसंधानस्य शाब्दबोधौपयिकत्व विरहात्. प्रागुक्त क्रमेण अपदादि विधि शब्दस्य पदान्तविधिपरत्व आवश्यकतया णत्व विधौ वार्तिका प्रवृत्तिरिति ॥ १६ ॥

नच पदाधिकारे अंगाधिकारे च सूत्रोपात्तस्य विशेषणत्वं पदांगयोर्विशेष्यत्वं इति नियमः. तेन स सजुषोरुः इत्यादिषु सजुष् शब्दान्तस्य पदस्य रुरित्यर्थात्. परमसजूरित्यादावपि रुत्व सिद्धिः. सजूरित्यादैतु व्यपदेशिवत् भावेन तदन्तत्व सत्वात् नदोषः. एतदभि प्रायेणैव पदाङ्गाधिकारे तस्य तदन्तस्यचेति पठ्यते. इत्थंच नलोपः प्रातिपदिकान्तस्येत्यत्रापि प्रातिपदिकस्य विशेषणत्वं पदस्य विशेष्यत्वञ्च आवश्यकम् इति क्लिष्टान्वयोपि सोढव्य एव. तथाच प्रातिपदिक संज्ञकम् यत् पदं तदन्तस्य नस्य लोपः इत्यर्थात्. शाब्दबोधस्य पद शब्द समभिव्याहृतत्वेन अन्तपदानुसंधानाधीनत्व सत्वेन उक्तानुपपत्ति विरहात् पदान्त विधावित्यभिधान संभवेन प्रागुक्ताशयवर्णनोपपत्या अपदादि विधिशब्दस्य पदान्त विधि परत्वं नसंभवत्येवेति वाच्यं ॥ १७ ॥

यतः येन बिधिरिति शास्त्र प्रवृत्यर्हस्यैव सूत्रोपात्तस्य विशेषणत्वं इति नियमः ततश्च प्रकृते प्रातिपदिकेन तदन्तविधौ प्रयोजत विरहेण तत्र येन विधिरिति शास्त्राप्रवृत्या तस्य पूवोक्तरीत्या विशेष्यत्वं पदस्य विशेषणत्वमित्येव युक्तं अन्यथा क्लिष्टान्वय प्रसंगात् तथाच प्रागुक्त प्रक्रियया अपदादि विधि शब्दस्य पदान्त विधिपरत्वं आवश्यकमिति ॥ १८ ॥

नचैवं सति परमदण्टिनां इत्यत्र ङमुट् प्रसंगः अत्र ङमुटः पदान्तविधित्व विरहेण प्रत्ययलक्षण सत्वात् अपदादि विधिशब्दस्य पदादिविधिभिन्न सर्व संग्राहकत्वेतु नायंदोषः ङमुटोपि तथात्वसत्वेन प्रत्ययलक्षण निषेधादिति वाच्यं ॥ १९ ॥

पद इति मण्डूकप्लुतिमाश्रित्य अजादेः पदस्य ङमुदिति भाष्ये व्याख्यातत्वेनादोषात्. नत्रिव युक्त परिभाषाबाधस्य अन्याय्यतया अपदादिविधि शब्दस्य पथान्तविधिपरत्वा वश्यकत्वात् ॥ २ ॥

नचा पदादि विधावित्यत्र अनित्याया नञिव युक्तपरिभाषाया अप्रवृत्यैव पदादि विधिभिन्नेषु सर्वत्र प्रत्यय लक्षण निषेधांगीकारेण निर्वाहे मण्डूक प्लुत्याश्रयणं अयुक्तं. तत्प्रतिपादन परवाक्यन्तु एकदेश्युक्तिरेव. तथाच अपदादि विधिशब्दस्य न पदान्त विधि परत्व संभवइति वाच्चम् ॥ २१ ॥

यतः अपदादि विधिशब्दस्य पदान्त विधिपरत्वाभावे माष कुंभवापेन चतुरंगयोगेनेत्ययादौ पद व्यवायेपीति निषेधानुपपत्तिः कुंभशब्दस्य प्रत्यय लक्षणनिषेधेन पदत्वा संभवात् उत्तरपद संबंधिकार्यएव अयन्निषेध इत्यंगीकृत्य उक्तानुपपत्ति वारणेच भवन्नतेपि प्रागुक्तस्थले ङमुट् प्रसंग इति मण्डूकप्लुत्याश्रयणं आवश्यकमेव तथाच नञिव परिभाषा बाधस्यान्याय्यतया पदान्त विधि परत्वमेवापदादि विधि शब्दस्याश्रयणीयमिति. ॥ २२ ॥

नच पदान्त विधिपरत्वाश्रयणेपि पूर्व दण्डिप्रिय इत्यत्र नलोपानुपपत्ति परिहाराय मध्यमपदाति रिक्तस्यव अनेन प्रत्ययलक्षणनिषेध इत्याश्रयणीयं. मध्यमत्वञ्च पूर्व पदोत्तरत्वेसति. उत्तरपद पूर्वत्वं इत्थंच माषकुंभवापेनेत्यादौ दर्शितानुपपत्ति विरहात्. अपदादि विधि शब्दस्य पदादिविधिभिन्न सर्व संग्राहकत्वमेव युक्तं. पदान्त विधिपरत्वे प्रागुक्तरीत्या मण्डूक प्लुत्याश्रयण प्रसंगादिति वाच्यं ॥ २३ ॥

तद्धितार्थेति समासोत्तर पदादिरिक्तस्यैवानेन निषेध इत्याश्रयणीयतया माषकुंभवापेनेत्यादावु क्तानुपपत्ति परिहाराय पदान्तविधिपरतया आवश्यकत्वात्. तथाहि. परमवाचि वासिदधिसेचि शय इत्यादौ शयवासवासिष्वित्यलुक्समासे कुत्वादि प्रसंगः. दर्शितमध्यमपदत्व सत्वेन प्रत्यय लक्षणनिषेधात्. नद्धितार्थेति समासोत्तर पदातिरिक्तसैव निषेध इति स्वीकारेतु नायं दोषः इहापि प्रत्यय लक्षण निषेधात् अतस्तथैवांगीकरणीय मिति ॥ २४ ॥

नचैवंसति पञ्चगवधन इत्यादावेङः पदान्तादतीति पूर्वरूपापत्तिः गोशब्दस्य तद्धितार्थेति समासोत्तर पदरूपतया प्रत्ययलक्षणा निषेधात्. यदिच एङः पदन्तादित्यत्र पदे अन्तः पदान्त इत्येव समासांगीकरणीयः अन्यथा मधुशब्दादपत्यार्थप्रत्ययस्य तद्राजस्येव बहुत्वे लुकिजसिचेतिगुणे अन्तर्वर्ति विभक्त्यापदत्वात् मधव इत्यत्र पूर्वरूपापत्तेः तथाच न पञ्चगवधने दोष इति विभाव्यते तदा पञ्चर्चधन इत्यत्र कुत्व प्रसंगः ऋक्चब्दस्य तद्धितार्थेति समासोत्तर पद रूपस्य प्रत्यय लक्षणनिषेधात्. अत उत्तरपदाव्यवहित पूर्वभिन्नस्यैवानेन निषेध इत्याश्रयणीयं तथासति समासान्तेन व्यवधानात् नपञ्चर्चधनेदोषः परमवाचि वासीत्यादौतु विभक्त्या व्यवधानान्नदोषः. इत्थंच माष कुंभवापेनेत्यादौ दर्शितानुपपत्यनवतारात् प्रागुक्तरीत्या मण्डूक प्लुत्याश्रयण गौरव संपादकं पदान्त विधि परत्वमनुचितमेवेति वाच्यं ॥ २५ ॥

पदान्त विधि परत्वानभ्युपगमे माषकुंभवापेनेत्यत्र णत्वनिषेधानुपपत्ति प्रसंगात्. तथाहि माष कुंभ शब्दात् अज्ञाताद्यर्थक कप्रत्ययेन घटिते तत्र कुंभ शब्दस्य प्रत्यय लक्षणमन्तरा णत्व निषेधोदुरुपपादः

तथाच कप्रत्ययेन व्यवधानादुत्तरपदाव्यवहित पूर्वभिन्नतया तस्य प्रत्यय लक्षण निषेध प्रसंगवारणाय अपदादि विधि शब्दस्य पदान्त विधिपरत्वं आवश्यकमेवेति ॥ २६ ॥

नच पदव्यवायेपीत्यस्यातद्धित इति वार्तिकैकवाक्यतया णत्वाश्रयातिरिक्त तद्धित भिन्न परकपदव्यवधाने णत्वन्नेति वाक्यार्थः. णत्वाश्रयातिरिक्तेति करणात् रम्यविणेत्यादौ णत्वाश्रय विभक्ति परकपदव्यव धानेपि नदोषः इत्थंच माषकुंभवापेनेत्यत्र कुंभशब्दस्य तद्धित परकतया णत्वनिषेधा प्रवृत्या क्षुभ्नादि पाठेनैव तस्यसर्वैरपि वारणीयतया नदोष इति वाच्यं ॥ २७ ॥

अतद्धित इत्यत्र तस्मिन्निति परिभाषोपस्थिताव्यवधानांश ग्रहणेनैव उपपत्या क्षुभ्नादित्वस्य अकल्पनीयत्वात् कुंभपदस्यवापशब्दपरकत्वसंभवात्. निमित्तोत्तरं यत् पदं तदुत्तरंयत् तद्धित भिन्नं-तदुत्तरस्य णत्वन्नस्यादितितु निष्कर्षः. इत्थञ्च. माषकुंभक वापेनेत्यत्र दर्शित निषेधोपपत्तये पदान्त विधिपरत्वं आवश्यकमेवेति ॥ २८ ॥

नचैवं सति परमगिरावित्यादौ र्वोरुपधाया इति दीर्घ प्रसङ्गः. तस्य पदान्तविधित्व विरहेण प्रत्यय लक्षण निषेधाप्रवृत्तेः अतः अपदादि विधि शब्दस्य पदादिविधिभिन्न सर्वसंग्राहकत्वं आवश्यकम्. माषकुंभकवापेनेत्यादौ दर्शितानुपपत्तिस्तु उत्तरपद संबंधिकार्यएव अनेन प्रत्ययलक्षणनिषेध इत्याश्रित्य परिहरणीया. इत्थञ्च, णत्वविधावपि अनेन प्रत्यय लक्षण निषेध सिद्धिरिति वाच्यं ॥ २९ ॥

यतः उत्तरपद संबंधिकार्यएव अनेन प्रत्यय लक्षण निषेध इत्यंगीकारेपि परमयुवयोगिनेत्यत्र णत्व निषेधानुपपत्तिः तस्य उत्तर पद संबंधित्वानपायात् अत उत्तर पद निष्ठंयत् पदत्वं तत्प्रयुक्तः तत्समानाधिकरणश्च योयमपदादिविधिः तत्रैव निषेधइत्याश्रयणीयं. ततश्च दर्शितस्थले णत्व निषेधस्य युव शब्द वृत्ति पदत्व प्रयुक्तत्वेपि तत्समानाधिकरणत्व विरहान्नदोषः प्रागुक्त कुत्वादि साधारण्यानुपपत्तिस्तु तादृशप्रयुक्तत्व संभावना विषयत्व विवक्षया परिहरणीया. तावत्पर्यन्तस्य वार्तिकेनालाभेपि गत्यन्तरविरहा त्तथैव विवक्षणीयं. इत्थञ्च णत्व विधा वुक्त वार्तिक प्रवृत्तिः नोपपद्यत एवेति ॥ ३० ॥

नचैवंसति परमविदुषेत्यादौ षत्वानुपपत्तिः तस्य उत्तरपद निष्ठ पदत्व सामानाधिकरण्या संभवेन तत्र प्रत्यय लक्षणा निषेधात्. अतः अपदादिविधौ पदत्व सामानादिकरण्यादि विशेषण निवेशो नोपपद्यते. परमयुवयोगिनेत्यादौ दर्शितानुपपत्तिस्तु कार्यभाज उत्तरपदस्य अनेन प्रत्यय लक्षण निषेध इत्याश्रित्य परिहरणीया. तथासति युव शब्दस्य कार्यभाक् विरहेण पदत्वाविधातात्. तथाच णत्वविधावपि वार्तिक प्रवृत्तिरव्याहतैवेति वाच्यं ॥ ३१ ॥

एवमपिपदेव्यवाय इति सप्तमी समास पक्षे अपदादि विधि पदस्य पदान्तत्व प्रयुक्त विधिपरतया आवश्यकतया णत्वविधौ वार्तिक प्रवृत्यसंभवात्. तथाहि. आर्द्रगोमयेण शुष्क गोमयेपीत्यत्र पदव्यवायेपिति

निषेधवारणाय अतद्धित इति वक्तव्यमित्युक्तं वार्तिककृता. भाष्य कृतातु तद्वचन प्रत्याचिख्यासया पदेव्यवाय इति सप्तमीसमासः समाश्रितः. तत्र व्यवधानं प्रत्यासत्या पद कृतमेव ग्राह्यं. तेन चतुर्बह्वंगे णेत्यत्र पदपरक पहुच् प्रत्ययेन व्यवधानेपि नदोषः पदपरकंयत् पदं तेन व्यवधाने णत्वन्नेतितु निष्कर्षः. तथाच आर्द्रगोमयेणेत्यादौ तादृश व्यवधानाभावात् नानुपपत्तिः इत्थञ्च रम्ययुवयोगिनेत्यत्र कार्यभाजः योगिनित्युत्तर पदस्य प्रत्ययलक्षण निषेधे पदपरक पद व्यवधान विरहात् णत्वनिषेधानुपपत्ति प्रसंगः अतः तद्वारणाय पदान्तत्व प्रयुक्त विधिपरत्वमेव अपदादि विधि शब्दस्य समाश्रयणीयं. तथासति णत्वनिषेदस्य पदान्तत्वाप्रयुक्ततया प्रत्यय लक्षण निषेधा प्रवृत्तौ योगिन्नित्यस्य पदत्वसंभवात् नदोषः स्वघटित पदघटक वर्णनीरूपित पूर्वत्व तादृश वर्णनिरूपितोत्तरत्व उभयपद वृत्ति धर्म प्रयुक्त विधित्वेन सादृश्यादरणे अपदादि विधि शब्दस्य पदान्तत्व प्रयुक्त विधिपरत्वमपि संभवतीति ॥ ३२ ॥

नच पद व्यवायेपि इत्यत्र पदशब्दः पदत्वयोग्यपर इत्यवश्यं आश्रयणीयं अन्यथा माषकुंभवापि-नेत्यत्र गतिकारकोपपदानां कृद्भिःसह समासवचनं प्राक्सुबुत्पत्तेरिति वापिन्नित्यस्य सुबुत्पत्तेः प्रागेव समासेन पदत्वासंभवात् णत्वनिषेधानुपपत्तेः. तथाच प्रागुक्तस्थलेपि उक्तरीत्यैव णत्व निषेधोपपत्त्या पदान्तत्व प्रयुक्तविधि परत्वाश्रयणं अनावश्यकमेवेति णत्व विधौ वार्तिक प्रवृत्तिः अव्याहतैवेति वाच्यं ॥ ३३ ॥

गतिकारकेतिपरि भाषाया अनित्यतया वापिन्नित्यत्य सुबुत्पत्यनन्तर मेव समासाङ्गीकारेण सामञ्ज-स्ये पदशब्दस्य पदत्वयोग्य लाक्षणिकतायां मानाभावेन अपदादिविधि शब्दस्य परिभाषानुरोध्युक्तार्थपरताया आवश्यकतया णत्व विधौ वार्तिक प्रवृत्यसंभवात्. गतिकारकेति परिभाषाया अनित्यत्वञ्च उपपदमतिङिति सूत्रे कैय्यटेस्पष्टं. तत्रहि कर्तृकरणे कृताबहुलमिति बहुलग्रहणात् गतिकारकेति परिभाषाया अनित्यत्वं ज्ञाप्यते. तेन धनक्रीतादि सिद्धिरित्युक्तं ॥ ३४ ॥.

नच तथापि नाराणां अयनमिति तत्पुरुष समासे णत्वं उपपद्यतएव. उक्तपरिभाषया तत्र सुबुत्पत्तेः प्रागेव समासेन सामानपद्याक्षतेरिति वाच्यं ॥ ३५ ॥

गंधर्वगानादौ णत्व वारणाय निमित्तानधिकरण निमित्तिमत् पदत्व योग्याघटितत्वस्यैव सामानपद्य रूपताया आश्रयणीयतया तदसंभवात्. गंधर्व गानादेः एतावतैव वारणे तेषां क्षुभ्नादित्वांगी कारस्य अत्यन्तहेयत्वात्. ॥ ३६ ॥

नच गंधर्वगानादिषु सुबुत्पत्यनन्तरमेव समास इत्यङ्गीक्रियते दर्शितपरिभाषाया अनित्यत्वात् धनक्रीतादाविवात्रापि लक्ष्यानुरोधेनाप्रवृत्तेः तथाच एतावदैव तत्र णत्व वारणे सामानपद्य शरीरे पदत्व योग्यत्व निवेशनं अनुचितमेव. नारायण शब्देतु तादृश परिभाषाया अप्रवृत्तौ मानाभावेन तत्पुरुषसमासे णत्वं सूपपादमेवेति वाच्यं ॥ ३७ ॥

नरसंबंध्यधिकरणेषु वस्त्वन्तरेष्वपि नारायण शब्दस्य णत्वघटितस्य साधुता प्रसङ्ग परिहाराय तत्पुरुष नारायण शब्देपि सुबुत्पत्यनन्तरमेव समासस्याश्रयणायत्वात्. किञ्च निमित्तानधिकरण निमित्ति मत्पदाघटितत्वस्य सामानपद्यरूपत्वे वाहनमाहितादिति सूत्रवैय्यर्थ्यम्. इक्षुवाहणादिषु सुबुत्पत्तेः प्रागेव समासात् सामानपद्योपपत्या णत्वोपपत्तेः एवं अग्रग्रामाभ्यामिति वार्तिकस्यापि वैय्यर्थ्यम् अग्रण्यादेरुक्तरीत्यैवसिद्धेः अतो निमित्तानधिकरण निमित्तिमत्पदत्व योग्याघटितत्वमेव सामानपद्यमितिस्वीकरणीयं. तथाच तत् पुरुषसमासेपि णत्वं दुर्घटमेवेति ॥ ३८ ॥

नच तत्पुरुषे णत्वमुपपद्यतएव सुबुत्पत्तेः प्राक्समासेन पदत्वघटित सामानपद्योपपत्तेः. यत्तु नरसंबंध्यधिकरणेषु वस्त्वन्तरेष्वपि नारायण शब्दस्य णत्वघटितस्य साधुता प्रसङ्गइति. तन्न. लक्ष्यानुरोधेन वस्त्वन्तर परत्वे सुबुत्पत्यनन्तरमेव समासाङ्गीकारेण सामानपद्यासंभवात् यदपि वाहनमाहितादिति सूत्रस्य अग्रग्रामाभ्यां इति वार्तिकस्यच वैय्यर्थ्यमिति. तदपिन निगमार्थतया चारितार्थ्य संभवात्. तथाहि. वाहनमाहितादिति सूत्रस्य वाहन नकारस्य यदि णत्वं तर्हि आहितात्परस्यैवेत्येबंविध नियमपरतया उष्ट्रवाहनादि व्यावृत्तिफलकत्वं. अन्यथाहि. उष्ट्रस्य वाहनमिति कर्तरिषष्ठ्यन्तेन समासे सुबुत्पत्तेः प्रागेव समासावश्यं भावेन पदत्व घटित सामानपद्याक्षतेः अट्कुप्वाङ्ङित्यनेन णत्वप्रसङ्गः एवं अग्रग्रामाभ्यां इति वार्तिकश्यापि नियम परत्वं बोध्यमिति अतो नकश्चित्दोष इति वाच्यं ॥ ३९ ॥

गतिकारकेति परिभाषायानित्यत्वसैव आवश्यकत्वेन वस्त्वन्तरे नारायण शब्दस्य णत्वापत्तेः दुर्वारत्वात्. तथाहि. उक्तपरिभाषाया अनित्यत्वे वाहनमाहितादिति सूत्र वैय्यर्थ्य प्रसंगः. नहि तस्य इक्षुवाहणादौ विध्यर्थत्व संभवः. सुबुत्पत्तेः प्रागेव समासेन पदत्वघटित सामानपद्योपपत्या अट्कुप्वाङ्ङित्यनेनैव णत्वसिद्धेः. नाप्युष्ट्र वाहनादि व्यावृत्तिफलक दर्शितनियमपरत्व संभवः. तत्र लक्ष्यानुरोधेन सुबुत्पत्यनन्तरमेव समासाङ्गीकारेण णत्वाप्रसक्तेः. एवमुक्त परिभाषाया अनित्यत्वे दधिसेचावित्यादौ उपपदसमासे सात्पदाद्योरिति निषेधोपपत्तये भाष्ये पदादादिरति पञ्चमि समासाश्रयणमपि अनुपपन्नंस्यात् तत्र सुबुत्पत्यनन्तरं समासेनैव इष्टसिद्धेः. अत उक्तपरिभाषा नित्यैव धनक्रीतादिस्त्वजादित्वाङ्गीकारेण साधनीयः यद्यपि वार्तिककृन्मते उक्त परिभाषायाः अनित्यत्वमेव. अन्यथा, उत्तरपदत्वेचेति वार्तिके अपदादि विधावित्यभिधान वैय्यर्थ्य प्रसङ्गात्. दधिसेचावित्यादौ सात्पदाद्योरिति पञ्चमी समास आवश्यकतयैव षत्वनिषेधोपपत्तेः तथापि नदोषः. समानपद इत्यस्य यथाश्रुतार्थकत्वं अङ्गीकृत्य पूर्वपदादित्यस्य नियम परतायाः तैरङ्गीकारात्. नियमश्च निमित्तानधिकरण पदत्वयोग्य प्रवृत्तेर्नस्य यदि णत्वं तर्हि संज्ञायामेवेत्येवंविध इति न केवलयौगिक नारायण शब्दस्य णत्व संभव इति स्पष्टं अस्मदीय परमुखचपेटिकायां. भाष्यकृतान्तु प्रागुक्तरीत्या उक्त परिभाषायानित्यत्वमेव सम्मतमिति तदभिप्रेतं. प्रागुक्त सामान पद्यं यदि पदत्व घटितं तदा वस्त्वन्तरपर नारायण शब्दस्य णत्व प्रसंगोदुर्वारः वाहनमाहितादिति सूत्रस्य प्रागुक्त नियमपरत्व गौरवं. गंधर्वगानादीनां क्षुभ्नादित्व कल्पना गौरवञ्च प्रसज्यत इति पदत्व योग्यता घटित मेव तदादरणीयमिति न तत् पुरुष नारायण शब्दस्यापि शिवपरत्वे णत्वोपपत्तिरिति. ॥ ४० ॥

नच पदत्वयोग्यत्वं दुर्वचं यत्तु विभक्तीतरानपेक्षया लोके अर्थबोधकत्वेन यत् दृष्टं तत्वं पदत्व योग्यत्वमिति. तन्न मातृ भोगीणादौ णत्वानुपपत्तेः भोगीनेत्यस्य दर्शित पदत्व योग्यत्वानपायात्. नहि भोगीन इत्यस्यासाधुत्वं इत्येतावता शाब्दबोधजनकत्वमपैति उक्तंहि भाष्ये समानायां अर्थावगतौ शब्दैश्चा पशब्दैश्च शास्त्रेण धर्म नियमइति. हरिणप्युक्तं वाचकत्वाविशेषेपि नियमःपुण्यपापयोरिति. अतः अगत्या पदत्व घटितमेव सामानपद्यमित्याश्रयणीयं. वस्त्वन्तरपर नारायण शब्दस्यापि क्षुभ्नादित्वमंगीकृत्य णत्वं वारणीयं. प्रागुक्त गौरवञ्च सोढव्यं. इत्थञ्च तत्पुरुष नारायण शब्दस्य शिवपरत्वेपि णत्वं निर्बाधमेवेति वाच्यं ॥ ४१ ॥

पदत्वयाग्यतायास्सुवचत्वेन तत् धटित सामानपद्यसैव उक्तरित्या समाश्रयणीयतया दर्शितस्थले णत्वासंभवात्. तथाहि विभक्तीतरानधीन साध्वधीन शाब्दबोघ जनकत्वं पदत्वयोग्यत्वं भवतिचेदं गंधर्व गानमित्यादौ गानेत्यंशे गानमित्यादौ तस्य ताद्रशाबोध जनकत्व दर्शनात् भोगीनेत्यंशेतु नैतत्संभवति भोगीन इत्यस्य असाधुतया तदधीन बोधस्य साध्वधीनत्व विरहादिति ॥ ४२ ॥

नचैवंसति इन्द्रनिभादौ णत्वा पत्तिः निभादेरुत्तर पदत्वएव साधुतया निभइत्येतज्जन्य बोधस्य साध्वधीनत्व विरहेण निभेत्यंशस्य पदत्वयोग्यत्वासंभवात अतः पदत्व घटितमेव सामानपद्यमिति आश्रयणीयं तथासति निभादेः प्रत्यय लक्षणेन पदत्व संभवात् नदोष इतिवाच्यं ॥ ४३ ॥

निमित्तानधिकरण निमित्तिमदुत्तरपदाघटितं यन्निमित्ताधिकरण पदं तत्वस्यैव सामान पद्यरूप तया विवक्षितत्वेनानुपपत्ति विरहात् निभादेरपि समासचरमावयवत्व रूपोत्तरपदत्वानपायात् इत्थंच तत् पुरूष नारायण शब्दे सुबुत्पत्तेः प्राक् समासेपि न णत्वसंभवः. दर्शित सामान पद्य विरहात् इति ॥ ४४ ॥

नचैवंसति होतृपोतृ नेष्टोद्गातार इत्यत्र णत्व प्रसंगः नेष्ट्र शब्दस्य उक्तोत्तर पदत्व विरहात्. अतः पदत्वघटित सामानपद्यस्यैव समाश्रयणीयतया प्रागुक्तरीत्या तत्पुरुष नाराणशब्दे णत्वोपपत्तिरिति वाच्यं ॥ ४५ ॥

सुप्तिङ् विध्युद्देश्यतावच्चेदक धर्मवत्व रूपस्यैव पदत्वयोग्यत्वस्य सुवचत्वेन प्रागुक्तरित्या पदत्व घटित सामानपद्याश्रयणासंभात् तादृश उद्देश्यतावच्चेदक धर्मश्च प्रातिपदिकत्वं धातुत्वञ्चेति न सुबुत्पत्तेः प्राक् समासेपि णत्वसंभव इति ॥ ४६ ॥

नच चतुष्टयी शब्दानां प्रवृत्तिः जाति शब्दागुण शब्दाः क्रियाशब्दाः संज्ञाशब्दाः संज्ञोपसर्जनी भुतास्तु न सर्वादयइत्यादावाधुनिक संज्ञाया एव ग्रहण दर्शनेनात्रापि तथात्वमेव स्वीकरणीयं इत्थञ्च नारायणादि शब्देषु णत्वोपपत्तये योगविभागएव सर्वैराश्रयणीय इति केवलयौगिकस्यापि तस्य णत्वोपपत्तिरिति वाच्यं ॥ ४७ ॥

अक्तर्तस्विक्कारके संज्ञायामित्यादाविवात्र संज्ञा शब्दस्य रूढमात्र परत्वे नैवोपपत्तौ योगविभागा श्रयणस्यानुचितत्वात्. भाष्यानुक्त योगविभागस्य साधुता नियामकत्वेतिप्रसंगात्. पूर्वपदादिति सूत्र भाष्यादि विरोधाच्च ॥ ४८ ॥

नच तथापि पूर्वपदात्संज्ञायामित्यनेनैव शिवपर नारायण शब्दस्यापि णत्वमुपपद्यते. कूर्म पुराणादिषु शिवेपि नारायण शब्द प्रयोगसत्वेन तस्य तत्रासंज्ञात्व सत्वादिति वाच्यं ॥ ४९ ॥

गौणत्वेनापि संभवदुपपत्तिक काचित्कप्रयोग मात्रस्य शक्ति ग्राहकत्वे गंगादि पदस्य तीरादावपि शक्तिप्रसंगेन लक्षणोच्छेदापत्तेः. तेष्वदर्शनाधिकरणे उभयत्र प्रयोगादेस्तुल्यत्व एव विनिगमना विरहात् अनेक शक्तिकल्पनं. मात्रयापि वैषम्ये तत्रविनिगमकसंभवेन एकत्र शक्तिरन्यत्र लक्षणेत्येवयुक्तं. अनेकार्थत्व स्यान्याय्यत्वा दितिहि सिद्धान्तितं. अतः प्रसिद्धि प्राचुर्याभिधानकोशादिना नारायण शब्दस्य भगवति शक्तिः शिवेतुकाचित्क प्रयोग विषये लक्षणैवेति ॥ ५० ॥

नच कूर्म पुराणादिगत नारायण शब्दस्य उक्तरीत्या शिवे लाक्षणिकत्वे तस्यासाधुत्वापत्तिः संज्ञात्व विरहेण पूर्वपदादित्यनेन णत्वा संभवात्. प्रकारान्तरस्यच प्रागेव निरस्तत्वात्. यदिच संज्ञात्वं नाम रूढि शक्ति निरूपकत्वमेव. इत्थंच लक्षणया शिवपरस्यापि नारायण शब्दस्य भगवन्निष्ठरूढिशक्तिनिरूपकत्वेन संज्ञात्वानपायात्. पूर्वपदादित्यनेनैव णत्वोपपत्तिरित्युच्यते तदा केवलयोगेन शिवपरत्वेपि उक्तरीत्या णत्व संभवात्. सिद्धान्तसमीहितं अथरूढ्यर्थबोध परत्वमेव संज्ञात्वं नतुरूढि शक्ति निरूपकत्वं तथासति द्रुणस युधिष्ठिरादीनां केवलयोगेनान्यत्रापि साधुता प्रसंगात्. इत्थंच पूर्वपदादिस्यस्य केवल योगेन अन्यपर नारायण शब्देपि अप्रवृत्तिरेवेतिचेत्एवंसति लाक्षणिकेप्यप्रवृत्या शिवे रूढ्यभ्युपगममन्तरेण कूर्मपुराणादिगत नारायण शब्दस्य साधुत्वानुपपत्या तत्र रूढ्यभ्युपगम आवश्यक एवेति वाच्यं ॥ ५१ ॥

नारायण शब्दस्य भगवत् सदृशे लक्षणायां णत्वोपपत्या साधुत्वोपपत्तेः तत्रंहि सादृश्यं प्रति योगितया भगवतोपि शाब्दबोधेभानात् रूढ्यर्थबोधपरत्वरूपसंज्ञात्वमक्षतमेव. अतएवहि युधिष्ठिरादि शब्दाः सादृश्यमात्रावलंबिनशिष्टैःप्रयुज्यंते तस्मात् कूर्मपुराणादिगतनारायण शब्दो भगवत्सदृश लाक्षणिक एव कारणवाक्यगत नारायणशब्दस्य लक्षणया शिवपरत्वन्तु मुख्यार्थ भाध विरहात् अनुपपन्नमिति प्रागेवोक्तं ॥ ५२ ॥

नचैवमपि शिवसहस्रनामसु नारायण शब्दस्यापि पाठात् तत्ररूढ्यभ्युपगम आवश्यकः लाक्षणिकत्वे रूढिनिरूपकत्वरूप नामत्वानुपपत्तेः इति वाच्यं ॥ ५३ ॥

सर्वत्र सहस्रनामसु नामशब्दस्य प्रातिपदिकमात्रपरतया लाक्षणिकस्यापि तत्वानपायात् नामशब्दस्यहि प्रातिपदिकपरत्वं वैयाकरण प्रसिद्धं अत एव यानिनामानिगौणानि विख्यातानीत्यत्र विख्यात पदेनैव रूढिसिद्धिरनुग्रहीता भगवद्गुणदर्पणे नतुनामशब्देन ॥ ५४ ॥

**नच कूर्म पुराणे शिवनाम निर्वचन प्रकरणे नाराणामयनं यस्मात् तेन नारायणस्मृत इति निर्वचन दर्शनात् तत्पुरुषसमास रूपस्यापि नारायण शब्दस्य शिवे साधुत्वमावश्यकं इत्थंच णत्वोपपादक संज्ञात्वोप पत्तये रूढ्यभ्युपगम** आवश्यक एवेति वाच्यं ॥ ५५ ॥

लक्ष्यतावच्चेदक प्रदर्शन परतयापि उपपन्नस्य दर्शित निर्वचनस्य शक्ति ग्राहकत्वासंभवात्. **कथमस्य लक्ष्यतावच्छेदक प्रदर्शन परत्वमितिचेत् इत्थं कूर्म पुराण शिवसहस्रनामादिषु प्रयुक्तस्य नारायण शब्दस्य** भगवत् **सदृशत्वावच्छिन्ने लक्षणेत्युक्तं तत्र सादृश्य घटक धर्मः कोसावित्याकांक्षायां नरसंबंध्यधिकरण त्वमिति बोधयितुं दर्शितनिर्वचनंप्रवृत्तमिति. तथाच तावतैव उपपन्नस्य निर्वचनस्य न शिवे नारयण शब्दस्य शक्ति ग्राहकत्वं संभवति. अनन्यथा सिद्धनिर्वचनस्यैव शक्ति ग्राहकत्वात्. अत एव चित्रा-** ज्याधि **करणे** आपोवा **ऋत्वियमार्छन्निति पृष्ठशब्द निर्वचनस्य** लक्ष्यतावच्चेदक **प्रदर्शन परत्वमेवेतियुक्तं. तत्रहि स्तोत्र विशेष नामत्वेन प्रसिद्धस्य पृष्ठ शब्दस्य क्वचित् पृष्ठैरुपतिष्ठत इत्यादौ बृहद्रथन्तर वैरूपवैराज शाक्वररैवतसामसु स्तोत्रसाधनेषु लक्षणया प्रयोग इतिस्थिते तत्र** लक्ष्यतावच्छेदकत्वतात्पर्यविषय धर्माकांक्षायां **तत्प्रदर्शन परतयोपपन्नस्य रथन्तरादिषु** अब्वायुसुरत जनित वामदेव्य जन्यत्व रूप **पृष्ठशब्द** प्रवृत्ति निमित्त प्रदर्शनपरस्य आपोवा ऋत्वियमार्चन्नित्यादि निर्वचनस्य न शक्तिग्राहकत्वमिति उपपादितं ॥ ५६ ॥

**नच नाराणां** अयनं यस्मात् तेन नारायणस्मृत इत्यस्य कथं **लक्षयतावच्छेदक** प्रदर्शनपरत्वं ईदृश **स्थलेहि तृतीयापञ्चम्योः स्वप्रकृत्यर्थ घटक धर्मावच्छिन्न विशेष्यक शक्तिज्ञानाधीनत्वमर्थः. नारायण इत्यादेः तत्पद जन्य बोधविषयोर्थः. तथाच** नारनिरूपिताधिकरणत्वघटक धर्मावच्छिन्न विशेष्यक शक्ति ज्ञानाधीन **नारायण शब्द जन्य** बोधविषयत्वसैव शिवेलाभात्, तस्ययोगार्थतावच्चोदक प्रदर्शनपरत्वमेवावश्यकं. ततश्च केवलयौगिकत्वे व्याकरणाविहित णत्व घटिततया साधुत्वासंभवेन रूढ्यभ्युपगम आवश्यकः. उक्तनिर्वचन बलेन वा केवलयौगिकत्वेपि साधुत्वमास्तां. अतएव तत्पुरुष समासत्वेपि पुल्लिङ्गत्वोपपत्तिः लिङ्गमशिष्यं लोकाश्रयत्वा ल्लिङ्गस्येत्युक्तेश्च यद्यपि एवंसति व्याकरणाविहित कार्याघटितत्व विरहात् हेतोः स्वरूपासिद्धिः. तथापि उक्त निर्वचनान्यथानुपपत्तिकल्पित णत्वविधायक वचनस्यापि व्याकरण शब्देन विवक्षिततया नदोषः. तथाच केवलयौगिकस्यापि नारायण शब्दस्य साधुत्वं अव्याहतमिति वाच्यं ॥ ५७ ॥

यतईदृशस्थले तृतीयापञ्चमीभ्यां अवच्छिन्न त्वमेव बोध्यते. तच्च नारायणादि शब्दार्थतावच्छेदके नारायणादि शब्दजन्यबोधविषयत्वेअन्वेति. तथाच उक्त निर्वचनेन नारायण शब्दस्य नारनिरूपिताधि करणत्वावच्छिन्न विषयताशालिबोधजनकत्वमात्रमेवसिद्यति तादृश बोधजनकताच रूढ्या योगेन लक्षणयावेति प्रमाणान्तरावसेयमेव. तथाच प्रागुक्तरीत्या लक्षणाधीन शाब्दबोध विषयतावच्छेदकरूप लक्ष्यतावच्छेदक प्रदर्शनपरत्वमेव उक्तनिर्वचनस्याकामेनापि स्वीकार्यमिति नयौगिकत्व ग्राहकत्वं नवा तदन्यधानुपपत्या रूढ्यादि कल्पनमिति. यत्तु ईदृशस्थले स्वप्रकृत्यर्थ घटक धर्मावच्छिन्न विशेष्यक शक्तिज्ञानाधीनत्वमेव तृतीयाद्यर्थइति. तन्न. तथासति मंचस्थत्वात् मंच इत्युक्तः तास्थ्यात् ताच्छब्द्यं तास्थ्येन ताच्छब्द्यमित्याद्यनुपपत्ति प्रसंगात्

यदिच मंचस्थत्वं घटकमंचत्वावच्छिन्नविशेष्यक शक्तिज्ञानाधीतत्वं लक्षणाग्रह जन्य बोधेप्यक्षतं. लक्षणाग्रहस्य शक्तिज्ञानजन्य मंचोपस्थित्यधीनत्वात्, तथाच नोक्तस्थलेनोपपत्तिरित्युच्यते तदा नारायण शब्दस्य नारनिरूपिताधिकरणताश्रय भगवत्सदृश लाक्षणिकत्वेपि तज्जन्यबोधस्य नारनिरूपिताधिकरणत्व घटक नारत्वाद्यवच्छिन्न विशेष्यक शक्तिज्ञानजन्य तदुपस्थित्यधीन लक्षणाग्रहजन्यतया तादृश शक्ति ज्ञानाधीनत्वा क्षतेः नोक्त निर्वचनोपपत्या तस्य प्रागुक्तरीत्या लक्ष्यतावच्चेदक प्रदर्शनपरत्वमेवयुक्तं. किंच ईदृशस्थले तृतीयापंचम्योः स्वप्रकृत्यर्थ घटक धर्मावच्छिन्न विशेष्यक शक्तिज्ञानाधीनत्वार्थकत्वे नाराणामयनं यस्मात् तेननारस्मृतः तेन अयनं स्मृतमित्यादयोपि व्यवहारास्समंजसास्युः नारनिरूपिताधिकरणत्व घटक नारत्वावच्छिन्न विशेष्यक शक्तिज्ञानधीनत्वस्य तादृशाधीकरण त्वावच्छिन्न विशेष्यक शक्तिज्ञानाधीनत्वस्यच तत्तत्पद जन्यबोधे अक्षतेः यदिच तत्घटकायावन्तो धर्माः तत्तदवच्छिन्नविशेष्यक शक्तिज्ञानाधीनत्वमेव तत्र तृतीयापंचमीभ्यां बोध्यत इति न उक्त दोषावकाश इत्युच्यते तदाशेषःपरार्थत्वादित्यादेरनुपपत्तिः शेषपदरूढ्यज्ञानाधीनस्य परोद्देश्यक कृतिकारकत्वेन विहितत्वरूपपरार्थत्वावच्छिन्न बोधस्य तादृशपरार्थत्व घटक तत्तध्धर्मावच्छिन्न विशेष्यक शक्तिज्ञानाधीनत्वात्. किंबहुना, एवंसति नाराणामयनं इत्यादि निर्वनसैव असांगत्यं तत्पुरुषे पूर्वपदस्यविभक्ति अर्थविशिष्टे तादृश विभक्त्यर्थ एववा लक्षणायाः निषादस्तपत्यधिकरणे सिद्धान्तित तया योगाधीन नारायणशब्द जन्यबोधस्यापि नारसंबंध्यधिकरणत्व घटत संबंधांशे शक्तिज्ञानानधीनत्वात् तस्मात् ईदृशस्थले अवच्छिन्नत्वमेव तृतीया पंचमीभ्यां बोध्यतइति सर्वैरपि समाश्रयणीयमिति उक्त निर्वचनस्य लक्ष्यतावच्चेदक प्रदर्शनपरत्वमेवेति ॥ ५८ ॥

नच दर्शित निर्वचनात् प्राक् अजातत्वादजस्मृत इत्यादि दृश्यते. उत्तरत्रचभगवान् सर्ववि ज्ञानादिति तयोरुभयोश्च योगार्थपरत्वं निर्विवादं ततश्च तत्प्रायपाठात् अस्यापि तथात्वमेवावश्यकं उक्तंहि उपांशुयाजाधिकरणे प्रायोवचनात् इति सूत्रे "शिरोवाएतद्यज्ञस्ययदाग्नेयः हृदयमुपांशुयाजः पादावग्नीषोमीय" इति प्रधान प्राय पाठेन उपांशुयाजस्य प्राधान्यावगत्या "विष्णु रुपांशुयष्ठव्योजामित्वाय" "प्रजापति रुपांशुयष्ठव्यो जामित्वाय" "अग्नीषोमावुपांशुयष्ठव्यावजामित्वायेति" वाक्यानां याग विधिपरत्वे तद्बाध प्रसंगात् नतेषां तत्परत्वं किन्तपांशुयाजमन्तरायजतीति वाक्यस्यैव तथात्वमिति अथ कथं विष्ण्वादि वाक्यानां यागविधिपरत्वे प्राधान्यावगति बाध इतिचेत् इत्थं विष्ण्वादि वाक्यविहितयाग त्रयमध्ये अग्नीषोमदेवत्यस्यैव तावव्रतामग्नीषो मावाज्यस्यैव नावुपांशुपौर्णमास्यां यजन्निति वाक्येन कालसंबंधात् विद्वद्वाक्याधिकार वाक्याभ्यामपि तस्यैवग्रहणेन तस्यैव प्राधान्यसिद्धिः इतरयोस्तु फलवदफल न्यायेनाङ्गत्वमेव स्यादिति प्रायपाठावगत मुपांशु याजमात्र प्राधान्यं बाध्येतैवेति. तस्मात् यौगिक प्रायपाठेन यौगिकत्वमेव आश्रयणीयमितिबाच्यं ॥ ५९ ॥

अपेक्षित विधि प्राबल्येन उक्तनिर्वचनस्य लक्ष्यतावच्चेदक प्रदर्शनपरताया एवावश्यकत्वात् तथाहि प्रागुक्तरीत्या काचित्कस्य शिव विषय नारायण शब्दस्य लाक्षणिकत्वेन्यायबलान्निर्णीते. तत्र लक्ष्यता वच्चेदकापेक्षायां तत्प्रतिपादनपरत्वमेव उक्तनिर्वचन स्यावश्यमाश्रयणीयं नत्वनपेक्षितयोगिकत्व प्रदर्शन परत्वं अपेक्षित विधिः ज्यायाननपेक्षित चोदनादिति न्यायात्. अतएवहि. "वार्त्रघ्नीपूर्णमासेनूच्येते" "वृधन्वती

अमावास्यामित्यस्य लिंगक्रमाभ्यां आज्य भागांगत्वेन अवगतानां वार्त्रघ्न वृधन्वन्मन्त्राणां अपेक्षित व्यवस्था बोधकत्वमेव नानपेक्षित विद्वद्वाक्य विहित कर्मांगताबोधकत्वमिति प्रतिपादितं द्वितीये. एवंविधाभ्यर्हित विधिपरत्व संभवे हि प्रायपाठोप्यनादरणीयएव. अतएवहि समिधादि प्रयाजानां आरादुपकारकत्वेपि तत्प्रायपठितस्य स्वाहाकार प्रयाजस्य यक्ष्यमाण देवता संस्कारकतया संन्निपातित्वमेवेति स्थापितं दशमे. तस्मान्नोक्त निर्वचनस्य यौगिकत्व प्रदर्शनद्वारा रूढि ग्राहकत्वं यौगिकत्वेपि साधुताग्राहकत्वंवा. किंतु लाक्षणिकताग्राहकत्वमेव पृष्ठशब्दनिर्वचनवदिति सिद्धं. किंबहुना. नहि नारायणादीनां नाम्नामन्यत्र संभवः ऋते नारायणादीनि नामानि पुरुषोत्तमः प्रदादन्यत्र भगवान् राजेवर्ते स्वकंधुरमित्यादि वामनपुराणादि वचनैः नारायण शब्दस्य शिवेरूढ्य भाव बोधनात् प्रागुक्तनिर्वचनस्य लाक्षणिकत्वमेवाकामेनापि स्वीकार्यं किञ्च उक्तनिर्वचनस्य कूर्मपुराणे भगवत् कर्तृक शिवस्तोत्रान्तर्गतत्वेनैव प्रतिपादनात् तदंशस्य शिवमाहात्म्य परतया तामसत्वेनाप्रामाण्यमेव "अग्नेश्शिवस्यमाहत्म्यं तामसेषु प्रकीर्तितं" इति मात्स्यवचनात् तस्मात् सर्वथा उक्त निर्वचनात् नारायण शब्दस्य शिवे रूढिः यौगिकत्वेपि साधुत्वंवा नसिध्यतीति. तथाच नारमयनं यस्येत्यादि व्युत्पत्या शिवपरस्य नारायण शब्दस्य व्याकरणाविहित कार्य घटित तया असाधुत्वमेवेति सर्वं समंजसं.

श्रीशैलकृष्णसुधिया रचिता णत्वस्य चंद्रिकासेयं ।
कलयतु कुवलयमखिलं हृष्टंचामोद मेदुरंचसदा ॥
श्रीमते रघुनंदन परब्रह्मणे नमः
इति महाराज्ञीदत्त श्रीमहामहोपाध्याय संज्ञाविरुदशालिभिः
**श्रीकृष्ण** **तताचार्यैः** विरचिता णत्वचंद्रिका संपूर्णा.

श्रीमत्प्रणतार्ति हरवरद परब्रह्मणे नमः



# परमुखचपेटिका शुद्ध पत्रम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 5 | वाचः | वाचा |
| | 16 | अत्वरुप | आत्वादिरुप |
| | 17 | प्रतिपादकतावच्छेदकतावच्छे-दकतावच्छेदकता | प्रतिपादकावच्छेदकता |
| | 19 | वाचकतावच्छेदकतावच्छेदकता | वाचकतावच्छेदकता |
| | 21 | प्रवृत्तेः । परेण | प्रवृत्तेः परेण |
| 2 | 8 | संहत्रादि | संहर्त्रादि |
| | 20 | नारा रण शब्दस्य | नारायणशब्दस्य |
| | 30 | सादुत्वस्य | साधुत्वस्य |
| 3 | 3 | तात्यर्थ | तात्पर्य |
| | 5 | योग्यार्थ | योगार्थ |
| | 7 | योग्यार्थ | योगार्थ |
| | 7 | प्रतिव्याक्ति | प्रतिव्यक्ति |
| | 10 | तत्वाच | तथाच |
| | 15 | शैवोच्चारिंते | शैवोच्चरिते |
| | 30 | सब्दावात् | सद्भावात् |
| 4 | 8 | विसेधेन | विरोधेन |
| 5 | 17 | भवतित्युत्परित | भवतीत्युत्पत्ति |
| | 23 | अकामेवाकामेनापि | अकामेनापि |
| | 28 | नाराणादीनां | नारायणादीना |
| 6 | 7 | सदृशला क्षणिका | सदृशाला क्षणिका |
| | 13 | आकाशब्द | आकाश शब्द |

| पुट | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 7 | 10 | प्रसङ्गात् च | प्रसङ्गाच्च |
| | 12 | स्वप्ररकृत्यर्थ | स्वप्रकृत्यर्थ |
| | 15 | एकत्वत्वत्वच्छिन्न | एकत्वत्वावच्छिन्न |
| 8 | 19 | नमस्यादि | नमत्यादि |
| | 25 | वृत्तित्वरुपसम्बन्धेन | स्ववृत्तित्वं स्वरुपसम्बन्धेन |
| | 27 | सप्तम्यन्तसारार्थः | सप्तम्यन्नार्थः |
| 9 | 4 | सत्सप्तम्या | सति सप्तम्या |
| 9 | 8 | प्रवृत्तिनिराबाधैव | प्रवृत्तिर्निराबाधैव |
| | 10 | तन्निरुपत्व | तन्निरुपकत्व |
| | 19 | पदव्यवधानसम्भवेन | पदव्यवधानासम्भवेन |
| | 26 | पदे वि वर्तते | पदेऽपि वर्तते |
| 10 | 15 | सम्भवात् । संयोगान्त | सम्भवात् संयोगान्त |
| | 20 | उक्तपद | उत्तरपद |
| | 25 | माषकुध्य | माषकुम्भ |
| 11 | 9 | निषेधेन नेति | निषेधोनेति |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| | 24 | नत्रीव | नत्रिव |
| 12 | 6 | जन्यात्तदव | जन्यतातदव |
| | 30 | णत्वेपपत्तेः | णत्वोपपत्तेः |
| 14 | 4 | नारारायणादावपि | नारायणादावपि |
| | 27 | गौरवभिया च ते | गोरवभिया च |
| 15 | 24 | क्षुनादित्वा | क्षुभ्नादित्वा |
| | 25 | क्षुभ्नादि गणेन | क्षुभ्नादिगणे न |
| | 26 | ग्र हत्वाच्च | दुर्ग्रहत्वच्च |
| | 26 | आख्यातपाख्या नेति | आख्यातपाख्यातेनेति |
| 15 | 27 | तच्चासमानपदाते | तच्चासमानपदस्थ |
| | | निमित्तानिमिित्तिका सज्ञत्वादि | निमित्तनिमित्तिका संज्ञात्वादि |
| 16 | 1 | वार्तिका कारस्य | वार्तिककारस्य |
| | 15 | येनविधि शास्त्रेण | येनविधि शास्त्रेण |
| | 18 | स्वतास्सिद्धस्य | स्वतस्सिद्धस्य |
| | 20 | मुज्यत इति | युज्यत इति |
| | 26 | रित्याशङ्का | रित्याशङ्क्य |
| | 27 | व्यावर्तकत्व | व्यावर्तकत्वे |
| | 8 | भष भाव | भष्भाव |
| | 19 | विहतस्वप्रत्यय | विहितस्वप्रत्यय |
| | 6 | निश्रयं | निश्चयं |
| | 6 | सद्दवुह्यास्समान | सद्ब्रह्माद्यास्समान |

# श्रीणत्वचन्द्रिका शुद्धि पत्रम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 4 | रगुनन्दन | रघुनन्दन |
| | 6 | विनतैरग्रंयं | विनतैरग्र्यं |
| | 7 | संयमि शेरवरम् | संयमिशेखरम् |
| | 9 | सत्गुरोः | सद्गुरोः |
| | 13 | सत्ब्रह्मादि | सद्ब्रह्मादि |
| | 14 | एब | एव |
| | 15 | परत्ब | परत्व |
| | 15 | कारणबाक्य | कारण वाक्य |
| | 16 | कारणवाक्य धटक | कारणवाक्य घटक |
| | 17 | रूटय भावस्य | रूढयभावस्य |
| | 17 | रूठथादि | रूढयादि |
| | 21 | समुपब्रह्मयेत् | समुपबृह्मयेत् |
| | 22 | ताद्दश | याद्दश |
| | 24 | ईश्वरतातपर्यं | ईश्वरतात्पर्यं |
| 2 | 2 | शिब | शिव |
| | 3 | वाक्य धटक | वाक्यघटक |
| | 5 | सिद्धि धरिति | सिद्धिरिति |
| | 8 | सिद्धरुद्धेश्यतायां | सिद्धेरुद्देश्यतायां |
| | 12 | साधूनेब | साधूनेव |
| 2 | 12 | एकशब्दः | एकरशब्दः |
| | 13 | जनकताबच्छेदकतया | जनकतावच्छेदकतया |
| | 15 | शठदः | शब्दः |
| | 15 | कार्याधटितत्वे | कार्याघटितत्वे |
| | 16 | विद्युद्धेश्यतावच्छेधक | विध्युद्देश्यतावच्छेदक |
| | 17 | सुव्विद्युदेश्यताबच्छेतक | सुव्विध्युद्देश्यतावच्छेदक |
| | 20 | अटकुप्त्वङित्यनेन | अट्कुप्वाङित्यनेन |
| | 25 | अट्कुप्त्वाङित्यनेन | अट्कुप्वाङिंत्नेन |
| | 26 | तथा | तदा |
| | 29 | समानमेब | समानमेव |
| 3 | 1 | पदाधटित | पदाघटित |
| | 2 | पदधटिततया | पदघटिततया |
| | 4 | धटितत्व | घटितत्व |
| | 5 | रीत्या अभिन्नपदस्यत्व | रीत्या भिन्नपदस्थत्व |
| | 7 | अदकुप्तवाङि | अट्कुप्वाङि |
| | 8 | धठितत्वात् | घटितत्वात् |
| | 9 | असादुटव | असाधुत्व |
| | 12 | उत्रर | उत्तर |
| | 13 | सत्सप्तम्या | सति सप्तम्या |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | 14 | उट्टेश्यत्व | उद्देश्यत्व |
| | 14 | उभय धटित | उभयघटित |
| | 16 | पर्याप्त त्वेपि | पर्याप्तत्वेऽपि |
| | 16 | तत् धटक | तद्धटक |
| | 15 | प्रत्पय | प्रत्यय |
| | | पद्धटक | पदघटय |
| | 17 | नकारोट्टेश्यक | नकारोद्देश्यक |
| | 17 | बिरहेग | विरहेण |
| | 21 | दर्शितरित्या | दर्शितरीत्या |
| | 22 | तर्शित | दर्शित |
| | 22 | त्वाटयनुप | त्वाद्यनुप |
| | 23 | वर्णोट्टेश्यक | वर्णोद्देश्यक |
| | 25 | सत्सप्तम्या | सति सप्तम्या |
| | 27 | णत्ब | णत्व |
| | 28 | णत्वसौव | णत्वस्यैव |
| | 28 | निष्टद्त्व | निष्ठपदत्व |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 4 | 2 | तत् व्यापकत्वं | तद्व्यापकत्व |
| | 3 | तत् व्याप्यत्व | तद्व्याप्यत्व |
| | 3 | तत् धटित | तद्घटित |
| | 3 | धर्मावचिन्न | धर्मावच्छिन्न |
| | 4 | विषेयत्व | विषयत्व |
| | 5 | विद्धयुद्देश्यतावचेदक | विद्ध्युद्देश्यतावच्छेदक |
| | 6 | विद्धयुद्देश्यतावचेदककोठौ | विद्ध्युद्देश्यतावच्छेदककोटौ |
| | 6 | धटक | घटक |
| | 9 | तत् धटित | तद्घटित |
| | 9 | धर्मावच्चिन्नोद्देश्यताक | धर्मावच्छिन्नोद्देश्यताक |
| | 11 | कारणतावचेदक | कारणतावच्छेदक |
| | 11 | उद्देश्यताबचेदक | उद्देश्यतावच्छेदक |
| | 10 | कारणताचेदक | कारणतावच्छेदक |
| | 34 | तत् घटकतया | तद्घटकतया |
| 1 | 14 | प्रतियोगिताकाभावघटितो | प्रतियोगिताकाभावाघटितो |

இந்தக்கிரந்தத்தைப் பதிப்பிக்க ஸஹாயம் பண்ணின ஸ்ரீமதுபய வேதாந்தப்பிரவர்த்தக ஸ்ரீமதரண்டவன் வேதாந்த ராமானுஜ பஹரதேசிகன்ஸ்வாமிக்கும், அவ்வாறே வரக் ஸஹாயம் செய்த ஸ்ரீமதுபயவே, ஸ்டேட் பாங்க் T. S. ராகவாசார்யர் ஸ்வாமிக்கும், பரிபூர்ணமான பொருளுதவிசெய்த டி. வி. எஸ் சுந்தரம் சாரிடீஸ் அதிகாரிகளுக்கும், இந்தக்கிரந்த முத்ரணத்திற்கு அடியேனை த்வாரமாக்கிய அடியேனுடைய ஆசார்யாளுக்கும், ஒப்பிட்டுப்பார்க்க வேறொரு புத்தகம் கொடுத்து உபகரித்த, ஸ்ரீமதுபயவேதாந்த வித்வான் இளங்காடு ஈச்சம்பாடி ரங்கநாதாசாரியர் ஸ்வாமிக்கும் அடியேனுடைய ஸவிநயஸாஞ்சலீபந்த அனந்தப்ரணாமங்களை ஸமர்ப்பிக்கிறேன்.

த்ருடிதமான மாத்ருகையில் விட்டுப்போன, எழுத்து, பதம், வாக்கியம் முதலியவற்றை ஸமீகரணம் பண்ணி மாத்ருகையில் உள்ளபடி பரிசோதித்து, அழகரன பூமிகை ஸாதித்தருளிய ந்யாயமீமாம்ஸா வேதவேதாந்தவித்யாநிதி, ராமானுஜஸித்தாந்த பாஸ்கர, மஹாவித்வான் நாவல்பாக்கம், சதுர்வேத, சதக்ரது ஸ்ரீ அய்யாதேவநாத தாதாசாரியர் ஸ்வாமி ஸன்னிதியில் அடியேனுடைய அனந்த ப்ரணாமங்களை ஸமர்ப்பிக்கிறேன்.

இதில் காகிதம் சிரமத்தாலும் ஜ்ஞா[illegible]த்தாலும் பலதோஷம், இருக்கும், மஹான்கள் தோஷங்களை பார்க்காமல் விஷயங்களில் ஊக்கமாக இருக்கும்படி ஆசாஸிக்கிறேன்.

திருப்பக்குழி ஸம்பத்குமார தாதாசாரியர்.

ஸ்ரீ:



திருமலே லக்ஷ்மீகுமார கோடி கன்யகாதானம்.

மஹாமஹோபாத்யாய

**ஸ்ரீ கிருஷ்ணதாததேசிகன்.**